# द्धितान्ताः केचन शब्दाः

-इतिहासात्मिका तुलनात्मिका गुणदोषनिरूपणात्मिका च समीक्षा—



प्रणेता

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

# TADDHITĀNTĀḤ KECHANA ŚABDĀḤ

*( Some Words of Secondary Derivatives )*

**– An Historical, Comparative & Critical Study –**

*by*

**Dr. Bhāgīratha Prasāda Tripāṭhī 'Vāgīśa Śāstrī'**

***Senior Research Fellow***

Varanaseya Sanskrit Vishvavidyalaya

VARANASI

1967

*Published by :*
Dr. B. P. Tripāṭhī 'Vāgīśa Śāstrī'
B. 3/115, Shivala, Varanasi.

*Sole Distributors :*
MOTILAL BANARSIDASS
Chowk, Varanasi.

This book has been published with the subsidy of the University Grants Commission, New Delhi.

**Price Rs. 5**

*Printed by :*
Manager
New Kiran Press
Jagatganj, Varanasi-2.

# तद्धितान्ताः केचन शब्दाः

ः इतिहासात्मिका तुलनात्मिका गुणदोषनिरूपणात्मिका च समीक्षा ः

लेखकः संपादकश्च

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

सीनियर-रिसर्च-फेलो

वाराणसेयसंस्कृतविश्वविद्यालयस्थः

वाराणस्याम्

१८८९ तमे शकाब्दे

# प्रास्ताविकम्

व्याकरणनये जागर्ति कोऽपि महिमा भगवतः सूत्रकारस्य पाणिनेः । वार्त्तिककर्तुः कात्यायनस्य महाभाष्यप्रणेतुः पतञ्जलेश्च शब्दानामनुशासन-विधौ प्रभविष्णुं प्रभावं के न विदन्ति विपश्चितः । कात्यायनेन स्वीयैर्वार्तिकैः सूत्रेष्वनुद्दिष्टानां प्रयोगाणां साधुत्वं प्रतिपादयता शब्दशास्त्रा भूरिश उपकृताः । पतञ्जलिना स्वीयाभिरिष्टिभिः सूत्रवार्त्तिकाभ्याम-स्पृष्टानामल्पस्पृष्टानां वा पदानां साधुत्वं प्रदर्श्य व्याकरणशास्त्रे शब्द-साधुत्वविषये व्यापकानां नियमानां कापि प्रणाली विद्वद्धौरेयाणां पुरत उपस्थापितेति हेतोः उत्तरोत्तरं मुनीनां प्रामाण्यमित्याद्याभाणकानां तथ्यं स्फुटीकृतम् । मुनित्रयस्यैतस्य मतालोचनपूर्वकमेव शब्दानां साधुत्व-मुररीकरणीयमिति विषये न विद्यते कश्चन संशीतिलेशः ।

आधुनिकं पाश्चात्यदेशेषु वहुलप्रचारं भाषाविज्ञानशास्त्रं यास्कीयनिरुक्तोल्लिखितान् शब्दपरिवर्तननियमान् मूलतोऽनुसृत्य एतद्-विषयेऽनेकान् नूतनान् नियमान् निर्माय स्वकार्यकलापे साम्प्रतं प्रवर्तते । निरुक्तवद् भाषाविज्ञानमपि व्याकरणस्य कात्स्‍र्न्यं समुपन्यस्यतीति विषये न कोऽपि विपश्चित् संदिह्यति । प्राचीनव्याकरणागमस्य आधुनिक-भाषाविज्ञानेन साकं क्रियमाणा समन्वितिः शब्दानां साधुत्वविषये प्रयोग-विषये च कमपि महिमानमाधत्ते । शब्दानाम् ऐतिहासिको विकासक्रमः सुतरामाधीयमानो नवीनं परिणाममुन्नेतुं पारयतीति मदीया मनीषा । भाषाविज्ञानदृष्ट्या तद्धितान्तशब्दानां क्रियमाणं तौलनिकमध्ययनं शब्दानामुदयाभ्युदयविषये नूतनां दृष्टिमाधातुं प्रभवति गवेषणापराणां विद्वत्पुंगवानाम् ।

वाराणसेयसंस्कृतविश्वविद्यालयतो लब्धविद्यावारिधिपदवीकस्य डा० वागीशशास्त्रिणो लघुकायापि कृतिरियं शब्दपर्यालोचनविषये समधिकं गौरवं भजत इति निःशङ्कमुद्घोषयितुमलम् । अत्र केचन तद्धितान्ताः शब्दा विवेचिताः, परन्तु तेषां विवेचनशैली नितान्तं चमत्कारिणी तुलनात्मकभाषाविज्ञानाध्ययनमूलिका प्राचीन-नवीनोभयशास्त्रानुशीलन-भूयिष्ठा शब्दार्थविवेचन-निष्णाता वैयाकरणानां दृष्टिं नूनमावर्जयिष्यतीति मदीयो ध्रुवो विश्वासः । तद्धितप्रत्ययेषु बहवः प्रत्ययाः प्राचीनकाले संस्कृतभाषायां स्वतन्त्रा एव शब्दा अभूवन् ये साम्प्रतमपि संस्कृत-भाषायां तत्सम्बद्धासु इतरास्वपि पालिप्राकृतादिषु वा वर्तमानकालिकीषु हिन्दीत्यादिप्रान्तीयभाषासु वा वैदेशिकीषु लातिनीयूनान्यादिभाषासु वा प्रयुक्ताः समुपलभ्यन्त इति वागीशशास्त्रिणो मतं, प्राचीनैर्नूतनैश्च प्रमाणैः प्रमाणयितुं शक्यते । एतद्विषये नानाभाषागतशब्दानां यदस्मिन् लघुकाये निबन्धे यथाविध्यनुशीलनं तेन विहितं, तत् तु विपश्चितां ज्ञानवर्धनाय मनोरञ्जनाय च भविष्यतीति ध्रुवं प्रतीमः । बृहदाकारस्य ग्रन्थस्य परिचायकोऽयं निबन्धस्तस्य गवेषणामूलिकां प्रतिभामध्यवसायं च परिचाययति शब्दसाधुत्वे च कृतश्रमाणां वैयाकरणानां हृदयं नूनमावर्जयिष्यतीति वक्तुं पारयामीति निवेदयते ।

**बलदेव उपाध्यायः**

१०।६।६६ [ संचालकः अनुसन्धानसंस्थानस्य
वाराणसेयसंस्कृतविश्वविद्यालये ]

—: ० :—

# उपोद्‌घातः

देवाधिदेवमहादेवपुर्यां काश्यामस्यां पाणिनीयान् धातूंस्तदितरव्याकरण-धातूंश्चाधृत्य १६५६–१६६३ तमेषु वत्सरेषु गवेषणाप्रक्रमे धातुजांस्तज्जांश्च परिशीलितवता शब्दान् प्रत्यब्दं मयान्वभावि—कुतो न विशृङ्खलतामिता लतामिता पदवीयं दवीयसी सुमनोभिः सुमनायमानैरस्माभिराचेया संफुल्ला प्रफुल्लयेत् पादातिकान् इति । चतुःषष्टिकलेशकृपालवलेशतश्चतुःषष्टितमे वत्सरे विश्वविद्यालयानुदानायोगेन प्रस्तावना सा समर्थिता प्रयोगनिदर्शनात्मिका ।

प्रयोगनिदर्शनेन समम् ऐतिह्यं तुलना गुणदोषविवेचना चेति निकषत्रयी समाश्रिता नूनं विश्लेषणमुकुटायते संकुलायते शास्त्रकान्तारे । प्रयोगनिदर्शनैतिह्ययोरुभयोरन्योन्याश्रयः । विना प्रयोगमैतिह्यम्, ऐतिह्यमन्तरा च प्रयोगपरीक्षणं दुःशकम् । समिताशब्दो दिव्यावदाने प्रयुक्त इति प्रयोगनिदर्शनमात्रेण न कृतकृत्यतामेष्यत्यैतिह्यवेत्ता, न च स्वीकरिष्यति तदीयामिहत्यां सत्तां परीक्षणमन्तरा । परीक्षणस्य चानेके विषयः—( १ ) यत्र यद् यन्त्रं निर्मीयते तस्मिन् देशे तत्रत्यायां भाषायां च तस्य यन्त्रस्य यन्त्रावयवानां च नामानि भवन्ति । तदुपयोगभूमिस्तत्प्रकाराश्च तद्देशीयानां भाषाणामन्यतमायां सर्वासु वा समधिगम्यन्ते; (२) तादृशशब्दस्य तदर्थको मूलधातुस्तत्प्रकारकाश्चान्ये शब्दास्तत्र भाषायामवश्यम् उपलप्स्यन्ते । दिव्यावदानात् पूर्वं समिताशब्दो नेह प्रयुज्यते स्म भारते । इयं समिता ( मैदा ) गोधूमप्रभवा । तस्या लक्षणं राजनिघंण्टे त्वित्थम्—

गोधूमा धवला धौताः कुट्टिताः शोषितास्तथा ।
प्रक्षिप्ताः सा विनिष्पिष्टाश्चालिताः समिता स्मृता ॥

समितया के के पदार्था निर्मीयन्ते स्मेति विचारप्रचारे 'घेवर'[1], मठरी[2], जलेबी[3], समोसा[4], सेमई[5], माँड़ा[6], फुलका[7], स्मृतिपथमारोहन्ति ।

---

१. घेउर, घेव्वर ( देश० )—सुपासनाहचरिअ १३. तुलनी० सं० घृतपूरम् ।
२. मठरो, मट्ठी ( माँठा )—देश० । मट्ठ ( मृष्ट- = चिकना ) ।
३. हि० जीलाव ?
४. समोसा ( देश० ? ) ।
५. सेमई, सेंवई ( सं० सेविका ? ) ।
६. माँड़ा ( हि० माड़ना ? ) ।
७. फुलका ( हि० फूलना ? ) ।

गोधूमचूर्णेन च फुलका, रोटी[1], बाटी ( गाँकर ), खस्ता[2], लिट्टी[3] (रुआ), पूड़ी[4], कचौड़ी[5], परोठा (?) -प्रभृतीनि खाद्यानि प्रणीयन्ते। एतेषां निर्माणोपकरणानि कानि कानि ? इति विवेचनायां भोजनपदार्था आर्याणां विवेचनीयतामर्हन्ति। कौटलीयेऽर्थशास्त्रे मध्यमभोजनस्य 'आर्यभक्तम्' इति नामधेयम्। तत्रौदनसूपमात्रं भोजनम्[6]। अर्थशास्त्रं दिव्यावदानग्रन्थाद् एकशताब्दीप्राक्तनम्।

तुर्कादयो यादृशं भोजनं गोधूमरोटिका-मांसादिसमन्वितं कुर्वन्ति स्म, भारतीयास्तादृशमकृत्वा कणेन कणं भुञ्जते स्म (गल्लह रा बा-गल्लह मी-खुर्दन्द)[7]। भक्तं द्विदलं मनाग् घृतमितीदं भारतीयानां भोजनम् इति सप्तदशखिस्ताब्दस्य प्रथमार्धे हालैण्डदेशस्य वाणिजेन पेलसैर्ट (F. Pelsaert)-नामकेन लिखितम्[7]। पुष्यमित्रकालिकेन महाभाष्यकारेणापि लिखितम्—दासा भक्तस्य तैलस्य च कृते कर्मणि प्रवर्तन्ते[8]। महाभाष्ये सूपकारवद् भक्तकारशब्दोऽपि[9]। संपूर्णे महाभाष्ये समितायाः गोधूमस्य तन्निर्मितस्य कस्यचन पदार्थस्य वा मनागपि चर्चा नास्ति। तत्र स्थले स्थले √पच् धातो-

---

१. रोट्ट ( दे० ) =तन्दुलपिष्टम्—ओघनिर्युक्ति-३६३,३७४; पिण्डनिर्युक्ति-४४; वृहत्कल्पभाष्य-१। गुर्ज० लोट।
रोट्टक ( दे० )—महा०।

२. खस्तः ( फारसी )। खोनचा ( फा० ख्वान्चा )।

३, लिट्ट, लिट्टी ( देश० ) ?।

४. पूरी ( सं० पूलिका ? )।

५. सं० कर्चरिका ?, हि० कचोर।

६. अखण्डपरिशुद्धानां वा तण्डुलानां प्रस्थः। चतुर्भागस्सूपः, सूपषोडशो लवणस्यांशः; चतुर्भागस्सर्पिषस्तैलस्य वा, एकम् आर्यभक्तम् (=मध्यमप्रतिपत्तिकस्य पुरुषस्य भोजनम्)। प्रस्थषड्भागस्सूपः, अर्धस्नेहमवराणाम्, पादोनं स्त्रीणाम्, अर्धं बालानाम्।

—कौटलीयम् अर्थशास्त्रम् २,१५ ( १०५ पृ० )।

७. डॉ० सुनीतिकुमार चटर्जी : भारत में आर्य और अनार्य, ८३ पृ०।

८. तथा य एते दासाः कर्मकरा नाम तेऽपि स्वभृत्यर्थमेव प्रवर्तन्ते भक्तं तैलं च लप्स्यामहे—महाभाष्यम् ३.१.२६ ( गु० प्र० सं० ९३ पृ० )।

९. पचन्ति भक्तकाराः—१.३.७२ ( गु० प्र० सं० २६४ पृ० )।

रुल्लेखः, अर्थस्तु—तण्डुलानां विक्लित्तिः[1]। अन्नेषु खाद्येषु तदुपकरणेषु चैतेषामुल्लेखो महाभाष्ये—

**दध्योदनः, गुडधानाः** ( २.१.३५ ); **भक्तबीजबलीवर्द—; रन्धनाय स्थाली, अवहननायोलूखलम्** ( २.१.३६ ); **पिष्टपिण्डी—,** (२.१.५८); लौहितशालि–, ( २.१.६६ ); तैलं भुक्तम्, घृतं भुक्तम् ( २.२.६;४.३.१५५ ); सर्पिषः पीयमानस्य ( २.२.११ ); **यवानां** लावकः ( २.२.१७ ); बहुयवाः ( २.२.२४ ); **उद्धृतौदना स्थाली** ( २.२.२४ ); **यवागूमग्निहोत्रं** जुहोति ( २.३.३ ); मूत्राय कल्पते **यवागूः** ( २.३.१३ ); उच्चाराय कल्पते **यवान्नम्** ( २.३.१३ ); तिलैः सह **माषान्** वपति ( २.३.१९ ); **विन्ध्यो वर्धितकम्**[2] ( २.३.५०; ६७; ३.२.११० ); भुक्तपूर्वी **ओदनम्** ( २.३.६५); **ओदनं** बुभुक्षुः ( २.३.६९ ); **यवाँल्लावको** व्रजति; **ओदनं** भोजको व्रजति; **सक्तून्** पायको व्रजति (२.३.७०); पाञ्चौदनिकः, शातौदनिकः (४.३.६६); **शालीन्** भुङ्क्ते **मुद्गैः, शालिविकारान् मुद्गविकारैः** ( ४.३.१५५ ); **व्रीहयः, यवाः, माषाः, मुद्गाः, तिलाः** ( ४.३.१६६ ); अलवणः **सूपः,** अलवणा **यवागूः,** अलवणं शाकम् ( ४.४.२४ ); आपूपिकः, शाष्कुलिकः,[3] मौदकिकः ( ४.२.१०४ ); **किमोदनः शालीनां** सक्त्वाढकमापणीयानाम् ( २.१.१ ); माषप्रति, सूपप्रति, ओदनप्रति ( २.१.९ ); **खलेयवम्, लूनयवम्, पूनयवम्** (२.१.१७); कश्मीरान् गच्छामः, **तत्रौदनं भोक्ष्यामहे** ( ३,२,११४ ); एका तिलोच्छ्रितिः ( ३,३,२० ); देवश्चेद् वृष्टो निष्पन्नाः **शालयः** ( ३,३,१३३ ); तद् यथा कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति, नान्तरीयकत्वात् ( ३,४,२१ ); स्वाद्वीं कृत्वा **यवागूं** भुङ्क्ते; पक्वौदनो भुज्यते देवदत्तेन ( ३,४,२६); श्राणा **यवागूः,**

---

१. इह पचेः कः प्रधानार्थः ? याऽसौ तण्डुलानां विक्लित्तिः—३.१.२६ ( गु० सं० ८४ पृ० )।
तु० पचधातोरर्थः—विक्लित्त्यनुकूलव्यापारः—वैयाकरणभूषणसारः।

२. वर्धितकशब्देन मूले स्थूलमग्रे सूक्ष्मं विशिष्टसंस्थानयुक्तं भक्तमुच्यते। तस्य महत्त्वप्रतिपादनाय विन्ध्यत्वमसदारोप्यते ( कैयटः २.३.५० )।

३. शष्कुली नाम तिलतण्डुलमाषमिश्रितयवागूः ( शब्दचन्द्रिका )। मत्स्यभेदः। महाभारते ( १२.२२८.६३ ); तु ७.६४.७ पिष्टकविशेषः—

पायसं कृसरं मांसमपूपानथ शष्कुलीः।
मोदकान् पूरिकापूपान् माषपूर्णाश्च शष्कुलीः।

श्रपिता यवागूः (६,१,२७); चरव्यास्तण्डुलाः (५,१,२); पुरोडाश्यं पुरोडाशीयम्[1] (४,१,२); सक्तव्या धानाः (४,१,२); वालेयास्तण्डुलाः (५,१, १३); मुद्गैः क्रीतं मौद्गिकम्, माषैः क्रीतं माषिकम् (५,१,३७); मुद्गा हि षष्टिरात्रेण पच्यन्ते (५,१,९०); धान्यं विक्रीणीते, यवान् विक्रीणीते (५,२,४७); पयस्कल्पा यवागूः (५,३,६७); शाल्यार्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते उपस्पृश्यते च, शालयश्च भाव्यन्ते (१,१,२२;१,३,१२;६,१,५०); नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न च मृगाः सन्तीति यवा नोप्यन्ते (१,१,३९;४,१,१); गौर्देवताऽस्य स्थालीपाकस्य गव्यः स्थालीपाकः (४,१,८५); ओदनपाणिनीयाः (१,१,७३); ब्राह्मणभिस्सा, ओदनभिस्सटा (६,४,१); पाचयत्योदनं देवदत्तो यज्ञदत्तेन (३,१,२६); पचत्योदनं देवदत्तः (२,३,४६;६५;३,१,८७); अपचदोदनं देवदत्तः (३,२,१२४); पचेलिमा माषाः पक्तव्याः (३,१,९४); साधु स्थाली पचति (३,१,८७); ओदनं पच तव भविष्यति (२,१,१); ओदनं मृदु विशदं पचति (२,१,१)। कात्यायनोऽपि पचत्योदनम् (१,१,६७) इत्युदाहरति। महाभाष्यकारस्य प्रस्तूयमानमिदमुदाहरणं संतोषाय चालम्—'आश्चर्यमिदं वृत्तम्—ओदनस्य च नाम पाकः, ब्राह्मणानां च प्रादुर्भावः (२,३,६५, गु० प्र० सं० ३२२ पृ०)। पाणिनेस्त्रीणि सूत्राणि भक्तविषयकाणि[2]। तृतीये सूत्रे 'विषयो देशः' इत्यर्थे भक्तल्-प्रत्ययः। भक्तम् = अन्नम्। प्राकृतभाषाया आहारार्थको भत्त-शब्दो हिन्दीभाषायां 'भत्ता' (=ओदनः, यात्रादिव्ययः) इति जातस्तदर्थमेव पुष्णाति संप्रत्यपि।

इतिहासाधारकेण भाषाध्ययनेन नाम सत्योद्घाटनम्। इदानीं समिताशब्दस्य 'सम्=सम्यक्, इता=प्राप्ता' इति व्युत्पत्तिः सुस्पष्टं कृत्रिमा भाति।

---

१. पुरोडाश्यम् = हविर्योग्यम् (भट्टि० ५.१२)। केचन—यवचूर्णनिर्मितरोटिकाविशेष इति वदन्ति यथा मनुस्मृतौ (६.११)—

वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः।
पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत् पृथक्॥

२. भक्तादणन्यतरस्याम् ४.४.६८—भक्तमस्मै दीयते नियुक्तम्—भाक्तः, भाक्तिकः।

भक्ताण्णः ४.४.१००—भक्ते साधुर्भाक्तः शालिः, भाक्तास्तण्डुलाः।

भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ४,२,५४—ऐषुकारीणां विषयो देशः ऐषुकारिभक्तम्।

अयं शब्दः खलु केन्द्र-जायामित्रादिवद् ग्रीसदेशीयः। तत्रत्यं नामधेयम्—'सेमिदालिस'[1] इति। अलक्षेन्द्रसमागमनसमये भारतं प्राप्तमिति निश्चयः।

एवं प्रामाणिक ऐतिह्ये समधिगते प्रश्नः समुदेति—'गोधूमाश्च कुतस्कुतः'? यदा भारते वर्षे गोधूमानां तन्निर्मितपदार्थानां वा नोपलभ्यतेऽभ्यवहारस्तदा वेदादिषूल्लेख[2] एतदीयः कुतः? इति। पाणिनीये गणपाठे (४,३,१३४) गोधूमशब्दः किन्तु कोपि वैयाकरणः प्रयोगं न दर्शयति। कौटलीयेऽर्थशास्त्रेऽपि 'गोधूमाश्च क्षुण्णाः' (२,१५;१०४ पृ०) इति सत्यपि गोधूमशब्दस्योल्लेखे विष्णुगुप्तस्तद्व्यवहारं न दर्शयति। यवास्तु क्षुण्णा भवन्त्युलूखले किन्तु सांप्रतिका गोधूमा न जायन्ते तथेति मन्ये खाद्यान्तरमिदानीमपरिचीयमानं साधारण्येनेति।

शतपथब्राह्मणे (५,२,१,६) त्वग्रहितानां गोधूमानां वर्णनम्। प्राग्ज्योतिषीयभाषायां यावनालीकान्नं शस्यम् वा 'गोम्धान' इति रूपेण प्रथितम्। सिंहलीयभाषायां 'गोयम'-शब्दो वर्धिष्णुशस्यवाचकः[3]। तैत्तिरीयब्राह्मणे शाङ्खायनश्रौतसूत्रे च गोधूमचषाल (= -यूपकटक-)-वर्णनम्। स चतुरश्रो भवति स्म, यूपस्तु बैल्वः; स खलु सप्तदशारत्निः[4]। क्वचित् तु प्राकृतो यूपोऽष्टाश्रिः, बैल्वश्चतुरश्रिः, गोधूमचषालश्च सप्तदशारत्निप्रमाणकः[5]।

१. द्र० Walther Prellwitz : Etymologisches Wörterbuch der Griechischen Sprache, Pages 408.

२. वा० सं० १८,१२; १९,२२; १९,८९; २१,२९। गौधूमं चषालम्। न वा एते व्रीहयो न यवा यद् गोधूमाः—तैब्रा० १.३.७.२; यद्गोधूमास्तेषां न त्वगस्ति—शब्रा० ५.२.१.६; यत्पक्ष्मभ्यस्ते गोधूमाः—शब्रा० १२.७.१.२; गोधूमैः—तैब्रा० २.६.४.४; २.६.११.१। गोधूमसक्तवः—शब्रा० १२.९.१.५

ये यवान्ना जनपदा गोधूमान्नास्तथैव च।
तान् देशान् संश्रयिष्यन्ति युगान्ते पर्युपस्थिते॥

—मभार० ३. १९०.४४–४५।

३. R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages.

४. चतुरश्रो गोधूमचषालो बैल्वो यूपः सप्तदशारत्निः—शाङ्खा० श्रौ० १५. १.१६। (A. Hillebrandt, vol. III, Calcutta 1897).

५. श्रुतौ प्राकृतो यूपोऽष्टाश्रिर्भवति। अत्र तु बैल्वश्चतुरश्रिः सप्तदशारत्निप्रमाणको गोधूमचषालश्च—शाङ्खा० श्रौ० १५,१,१६ (A. Hillebrandt, Vol. I, Calcutta 1888).

दक्षिणेषु संप्रत्यपि पूजादिविधौ गोधूमादिपिष्टविनिर्मितदीपश्चतुर्वर्तिकः (चौरस) प्रज्वाल्यते। मन्येऽन्नान्तरम्। तत्परिचयो गवीधुक- (गवेधु–) साहाय्येन कर्तुं पार्येत। गवीधुकाः=आरण्यगोधूमाः[1]। हिन्दीभाषायां 'कसेई', 'गरहेडुआ' 'कौड़िल्ला' इति कोङ्कणीयभाषायां च 'कसा' 'कसाड'-रूपेण प्रसिद्धाः। मुगलानां भारतप्रवेशेन सह यत् तथाकथितं भोज्यं गोधूमान्नमागतं तस्य तदानीं 'महागोधूम' इति रूपेण वर्णनम्, सुस्पष्टं च पश्चाद्देशात् समागमनोल्लेखो भावप्रकाशे[2]। षोडशशताब्दीकाद् भावमिश्रात् पूर्ववर्ती यादवप्रकाशो वैजयन्त्याम् (१२७,५३)—'गोधूमस्तु म्लेच्छभोज्यः' इत्यलेखीत्। वैजयन्तीसंपादको गुस्ताव्-महाशयस्तत्स्रोतस्तमिलभाषायामदर्शयत्—'गोदुमै' इति। 'मोहेन्जो-दरो'-स्थाने तत्प्राप्तिः[3]। भावप्रकाशे त्रिविधो गोधूमः—१. महागोधूमः (पश्चाद्देशात् समागतः), २. मधूली (मध्यदेशजा), ३. निश्शूको दीर्घगोधूमः (नान्दीमुखः)।

यथेदानीं भारतस्य सांस्कृतिकः संबन्धो विदेशैस्तथा वैदिके काले ततः परमपीति न तिरोहितमैतिह्यवेतॄणाम्। गणितज्योतिषातिरिक्तं ज्योतिष-

---

१. तत्र कर्मकाण्डगतानां 'जर्तिलयवाग्वा वा जुहुयाद् गवीधुकयवाग्वा वा (तैसं० ५.४.३.२) इत्यादिविधीनां नास्ति प्रामाण्यम्, प्रवृत्त्ययोग्यद्रव्यविधानेन सम्यगनुभवसाधनत्वाभावात्। अयोग्यत्वं च वाक्यशेषे समाम्नातम्—'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' (तै० सं० ५,४,३,२) इति। तत्र हि आरण्यतिलानामारण्यगोधूमानां चाहुतिद्रव्यत्वं निषिद्धम्।

—ऋग्वेदभाष्यभूमिका, ६ पृ० (ऋग्वेदसंहिता)।

२. गोधूमः सुमनोऽपि स्यात् त्रिविधः स च कीर्तितः।
महागोधूम इत्याख्यः पश्चाद्देशात् समागतः ॥३०।
मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा।
निश्शूको दीर्घगोधूमः क्वचिन्नान्दीमुखाभिधः ॥३१।

—भावप्रकाशः ५.८.३०–३१।

शूकमुण्डोऽशूकमुण्डो गोधूमः स च वंशजः।

—कल्पद्रुकोशः १३७,४३–४४।

३. Wheat and barley have both been identified : the wheat as Triticum compactum or T. Sphaerococcum, both of which are grown in the Punjab to-day.

—Sir Mortimer Wheeler : Indus Civilization, Pages 62.

माधिक्यतो वैदेशिकैर्दत्तम्। एवमेव मेसोपोतामिया इति पश्चिमजम्बूद्वीपं वेति प्राप्नुवतां भारतीयानां भवेद् गोधूमपरिचयः? मोहेन्जो-दरो-स्थाने तस्य प्रथमतो विद्यमानत्वात्। आद्या आर्या बहिर्भागत आयान्तो मार्गे गोधूमं परिचितवन्त[1] इति मतं सुदृढं नास्ति, इँग्लिशभाषायां शताधिका भारतीयाः शब्दा इत्याङ्गलानां भारतादागमनानुमानस्य हास्यकरत्वात्।

अवेस्ताभाषायां गोधूमः 'गन्तुमो' ( gantumō ) इति, नवीनपर्सियन्—गन्दुम्, ब्राहुइ—क्सोलुम् ( Xolum ) (< * γolum ) वलूची—गन्दीम् ( gandim ) < * गन्दूम—( : सं० धूम– ), γadum < * गन्दुम—खोतान—गनम् ( ganam < * गन्दम— ) । हित्ती—कन्त् ( = wheat ?) । ग्रीक् ( हैशन् )—गन्दोम, गन्दोमन् ( कन्नड—गोदी, तमिल—कोती ) । सेमेटिक— * हण्टिम् ( * hantim [ plur. ] = गोधूम— ) इति तु निष्प्रमाणम्[2] ।

संस्कृतव्युत्पत्त्याप्ययं शब्दः परीक्षणीयः—शब्दचन्द्रिकायामेष ह्रस्वोकार-विशिष्टः—'गोधुमः' इति । गुध्यते वेष्ट्यते त्वगादिभिः । √गुध्+ गुधेरूमः ( उणा० ५।२ ) इति 'ऊमः' । मानियरविलियम्स्-महोदयस्तु स्वकोशे—गोः = पृथिव्या धूमः ( इव ) इति मतं दर्शयति । तद्दर्शितव्युत्पत्त्यनु-सारेणास्यान्नस्य श्यामता भवेत्। मेदिनीकोषानुसारेण गोधूमः — नागरङ्गः, ओषधिविशेषः, व्रीहिभेद इति । अस्य पर्यायेषु १ बहुदुग्धः, २ अपूपः, ३ म्लेच्छभोजनः, ४ यवनः, ५ निस्तुषक्षीरः, ६ रसालः, ७ सुमना इति । एवमेतस्य पर्यायद्वयम् 'म्लेच्छभोजनः', 'यवनः' इत्यप्यस्म-द्दर्शितैतिह्यगवेषणापथमनुमोदते।

सांस्कृतिकेन संबन्धेन ततश्च वस्तूनामादानप्रदानेनास्मदीयसंस्कृतेर्विशा-लता चोदारचरितत्वं च सुव्यक्ते। गङ्गामुपेता नद्यः समवेतीभूय गङ्गैव नान्यत्। अस्माकं संस्कृतिमुपेताः संस्कृतयोऽद्य तथात्मसाद्भूता यत् पार्थक्य-मानेतुं न प्रभवो वयम्। ते शब्दा वस्तूनि च परकीयानीति प्रख्याने हृदयं विदीर्यत इवेत्यस्माकं संस्कृतेर्महत्ता कैर्न ज्ञायते ?

ऋग्वेदेऽपि दृश्यते सांस्कृतिकः संबन्धो दशममण्डलीये ८६ तमे वृषाक-पिसूक्ते। कः खल्वयं वृषाकपिर्मृगजातिर्हरितवर्णः ? इन्द्राणी पुरन्दरं तस्य

---

१. डा० सुनीतिकुमारचटर्जी : भारत में आर्य और अनार्य, ८२ पृ० ।

२. Manfred Mayrhofer : Kurzgefasstes etymologisches Wörterbuch des Altindischen.

नाशाय भणति—वृषाकपिं विश्वकद्रुः कर्णे गृह्णात्विति। स इन्द्रस्य सखेति वास्तोष्पतिस्तस्मै यज्ञे भागं दातुं समुद्यतः किन्तु तन्नारोचत शच्यै मनागपि[1]। ततः समुदेति शङ्का—कस्तावदयं वृषाकपिरिति। पार्जिटरमहाशयेन शब्दमेनं मनसि कुर्वाणेन नासिकनगरे गोदावरीनद्यास्तटे वृषाकपिघट्टो दृष्टः। पृष्टा गङ्गापुत्राश्च निवेदितवन्तः—हनुमानेकदेह समागत इति। स तु 'कस्यापि प्राणिनो नामधेयं तन्निवासस्थानभाषात्मकमिति धिया प्रक्रान्तोऽध्येतुं दाक्षिणात्यां भाषाम्। तत्र तेन विज्ञातं यद्—'आण्=पुमान् (वृषः), मन्ति=कपिः[2] इति। आण् (आन्ट्) इति शब्दः पुंवाचकः, मन्तिशब्दश्च वानरवाचकः। वीरपुरुषस्य तत्र सामान्यमेतन्नामधेयम्। पुंवानरशब्दसत्ता देवतार्थिकेति विज्ञायते सः 'आणमन्ति' इति शब्द ऋग्वेदकाले न तादृशरूपेण गृहीतः किन्तु तदनुवादस्तत्र विहितः। संस्कृतभाषायां महान् शब्दराशिर्विकीर्णो यः सांस्कृतिकसंबन्धान् दर्शयति। तस्य साहाय्येनानुसंधायका नवनवानि तथ्यानि प्रस्फोरयितुमाहूयन्ते (द्र० छात्रशब्दः)।

पालिप्राकृतापभ्रंशप्रादेशिकभाषा ऐतिह्यशृङ्खलायां संधिकटकमहत्त्वाधायिकाः। यथा संधिकटकमन्तरा शृङ्खला नैकरूप्यं प्राप्नोति तद्वत् पालिप्रा-

१. वि हि सोतोरसृक्षत नेन्द्रं देवममंसत।
यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः॥
किमयं त्वां वृषाकपिश्चकार हरितो मृगः।
यस्मा इरस्यसीदु न्वर्यो वा पुष्टिमद् वसु विश्वस्मादिन्द्र उत्तरः॥
यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि।
श्वा न्वस्य जम्भिषदपि कर्णे वराहयुर्विश्वस्मादिन्द्र उत्तरः॥
—ऋग्वेदसंहिता १०.८६.१–४।

२. ३४२ तमिल—आळ् āḷ=man, husband, adult; आण् āṇ = male. आळ् āḷ = a person, able person. आण् = able-person. आण्म = bravery, कन्नड—आळ् = soldier, messenger, a grown person in general, आळ्, आण् = male bravery, कुरुख्—आलस् husband, friend, आली = woman, wife (तु० संस्कृ० आलिः, आली = सखी। संस्कृते कृत्रिमा व्युत्पत्तिः)।
३७७७ मलयालम—मॅण्ण moṇṇ = monkey.
३८४५ तमिल—मन्ति monkey in general. मलयालम—मन्ति black-faced monkey.
—A Dravidian Etymological Dictionary.

कृतापभ्रंशप्रादेशिकभाषाभ्य ऋते नैतिह्यशृङ्खला संस्कृतभाषयैव प्रपुष्टिमुपेयात्। [ तत्र संस्कृतभाषा तु मालाया मध्यमणिरिव शोभते। विना तया तदाधारो विनश्येदचिराद् वलम् ]। असमासे निष्कादिभ्यः ( ५।१।२० ) इति पाणिनीये सूत्रे गणपाठगतो वाहशब्दस्तदनन्तरं द्रोणशब्दः। संस्कृतसाहित्ये सत्यामपि द्रोणशब्दोपलब्धौ वाह-शब्दोऽनुपलब्धो वाहिकशब्दोपीति काशिकाकारेण वाहद्रोण-शब्दावेकत्र पठितौ—वाहद्रोण ( वाहद्रोणिकम् ) इति। उन्मानादिवर्णना-प्रसङ्गे डाक्टरवासुदेवशरणाग्रवालमहोदयेनैष वाहशब्दो न स्ववर्णना-विषयीकृतः। किन्तु प्राकृतभाषामये तंदुलवेयालियपयन्नो-नामके ग्रन्थे स सुरक्षितो लभ्यतेऽशीतिमणार्थकः ( अष्टशताढकमितः )। *अवेर्दुग्धे सोढदूसमरीसचः* ( ४.२.३६ )-वार्त्तिकगत-दूस-शब्दस्य प्रयोगो नास्ति संस्कृतवाङ्मयान्तर्गत इति प्रादेशिक्यो भाषाः शरणम्। सिंधीयभाषायां 'दोशो' इति शब्दः खर्जूरनिर्ह्रतरसार्थकः। सीमावर्तिनीनां पश्तोप्रभृतीनां भाषाणां पर्यालोडनमत्यावश्यकम्। पाणिनीयगणपाठान्तर्गतानामनुपलब्धप्रयोगभूमीनां भूयिष्ठानां शब्दानां गवेषणा तत्र महते लाभाय कल्पेत।

निकषत्रय्यां तुलनाया द्वितीयं स्थानम्। तुलनया भाषाणां व्याकरणानां वा नवीनतथ्योद्घाटनं जायत ऐतिह्यं च सुपुष्टायते। भारतीयभाषातिरिक्तभाषागतशब्दानां भारतीयभाषागतशब्दैस्तुलना स्मारयेद् विच्छिन्नसंबन्धान्। सत्यामप्युपलब्धौ सिंधीभाषामयस्य दोशो-शब्दस्य, नार्थनिर्णयो जायते वार्त्तिककारीयस्य दूसशब्दस्य। जिप्सी ( रोमानी )-भाषायां √दोश् इति धातुर्दोहनार्थकः, 'दोशिपे' इति शब्दस्यार्थः 'दोहनम्' इति। इयं जिप्सी-( रोमानी )-जातिर्यूरोपदेशमितो राजस्थानात् कदा गता ? कात्यायनश्च किंदेशवास्तव्य इति निश्चयाय पर्याप्तोऽवसरः। ग्रीकलैटिनभाषयोः सप्तम्यर्थकस्य 'अन्ति'-शब्दस्योपलम्भेन ज्ञायते यद् ऋग्वेदीयः 'अन्ति' इति शब्दः सप्तम्यन्तस्तान्तात्-शब्दसत्तां स्मारयन् 'अन्तिक'-शब्दात् ककारलोपकल्पनयाऽन्तिशब्दसाधनं निरस्यति।

परस्परं व्याकरणानां तुलनाप्यनुद्घाटितं तथ्यमुद्घाटयति। 'अन्तिकबाढयोर्नेदसाधौ' ( ५.३.६३ ) इति सूत्रे बाढशब्दस्तदादेशश्च साधशब्दः क्रियाविशेषणवचनाविति निर्देशः प्रयोगरत्नमालाव्याकरणे प्राप्यते। मिथश्च महाभाष्यादीनामितरव्याकरणानां च तुलनया तथ्यमिदं सुस्पष्टीभवति ततोऽप्याधिक्यतः।

गुणदोषविवेचना च तृतीयो निकषोऽनुसंधानस्य। कस्मिंश्चिदप्यनुसंधाने प्रयोगनिदर्शनम् ( ऐतिह्यं ) तुलना चैवंरीत्योपस्थापनीये यन्निष्कर्षः

स्वत एव प्रकाशीभवेत्। उपस्थापना-प्रणाली गुणदोषान् स्वत एव समुद्गिरेत् (द्र० साधीयस्-शब्दः)। हठाद् गुणानां दोषाणां वाऽभ्यूहनमनुसंधानदोषः। निरपेक्षदृष्टिः पूर्वाग्रहविहीनता च प्रभवेतां तथ्यसमुद्घाटाय। सदोषानुसंधानापेक्षया तदकरणं साधीयः। अनुसंधानं नाम तत् पञ्चाग्नितपो यत् साधकेन स्वयमनुष्ठानीयं भवतीति तद् युवानम् अनुसंधायकं प्रौढीकरोति प्रौढं च वृद्धीकरोति।

अस्मिन् लघुकलेवरेऽपि पुस्तके मया तथ्योद्घाटनाय प्रयत्नोऽनुष्ठितो यथामति। तत्र प्रतिनिबन्धं नवीना स्थापना वा विचारो वा[1]। तुलनार्थमष्टोत्तरशतसंख्याका भाषाः समुद्धृता अष्टौ व्याकरणानि च। 'अन्तिकबाढयोर्नेदसाधौ' (५,३,६३) इति सूत्रं विवेचयता मया षण्मासा हापिताः। इत्थमेवान्येष्वपि निबन्धेषु पर्याप्तं कालो गतः, शब्देतिहासनिर्णयस्य दुरनुष्ठेयत्वात्। कियत् साफल्यमवाप्तं मयेतीह प्रेक्षकाः प्रमाणम्।

आचार्यप्रवरैः श्रीमत्क्षेत्रेशचन्द्रचट्टोपाध्यायैः १९६४ खीस्ताब्दतो विषयनिर्देशं कृत्वा बह्वन्यलभ्यानि पुस्तकानि च दत्त्वा महत् साहाय्यमाचरितमिति ते कोटिशो वन्दनीयाः। तत्रालभ्येषु पुस्तकेषु—Hermann Hirt : Indogermanische Grammatik ( Teil III ), Heidelberg 1927 पुस्तकं मूर्द्धन्यतां भजते। महामान्यानां परमोदाराणां सहृदयानां श्रीमद्बलदेवोपाध्यायानामसकृत् कृतज्ञतामावेदये ये समये समये पुस्तकादिप्रदानरूपं सर्वविधं साहाय्यं संपाद्य मां प्रोत्साहितवन्तः। सरस्वतीभवनपुस्तकालयीयाः सर्वे कार्यकर्तारः सहृदयं सौविध्यमुपनीतवन्त इति ते धन्यवादार्हा इति निवेदयते।

वाराणसेयसंस्कृत-
विश्वविद्यालये,
संवत् २०२४
गुरुपूर्णिमायाम्

विदुषां विधेयः
**भागीरथप्रसादत्रिपाठी 'वागीशःशास्त्री'**
ज्येष्ठानुसंधानपण्डितगणाभ्यन्तरः
( सीनियर-रिसर्च-फेलो )

---

१. अपि भवान् कलण्डलुपाणिं छात्रमद्राक्षीदिति। सकृदपि कमण्डलुपाणिर्दृष्टश्छात्रस्तस्य तदेव लक्षणं भवति ( महाभाष्यम् २, ३,३१; ३७ ) इति छिद्रवारणप्रवृत्तश्छात्र इति छत्रधारणशीलश्छात्र इति व्युत्पत्त्यनैयत्याद् भाषान्तरशब्दतुलनया जाता दुणदोषविवेचना।

# अस्मिन् ग्रन्थे प्रयुक्तानां कासाञ्चन भाषाणां परिचयः

**१. अरबिक् Arabic**—इयम् अरबदेशीयानां भाषा । सेमेटिकविभागान्तर्गतोपभाषा । सेमेटिकपरिवारस्य दक्षिणया शाखया [ हिम्यारिटिक् ( Himyaritic ) अबीसीनियन्-भाषाभ्यां सहितया ] संबद्धा, अन्यसेमेटिकभाषाभ्यश्च पुरातनतरेति मान्यता ।

इयं कोरन्-भाषा । इस्लामसंप्रदायस्य पवित्रा भाषा सुविशालं साहित्यमधिकरोति । एतस्याः शब्दाननेका भाषा गृह्णन्ति । ताश्चेमाः—पर्सियन्, तुर्किश्, हिन्दुस्तानी, मलय, स्पानिश् इति ।

**२. अर्मीनियन् ( अर्मेनियन् ) Armenian**—कृष्णसमुद्र-कास्पियनसमुद्रयोर्मध्ये लघ्वेशियात उत्तरपूर्वस्थितः 'अर्मीनिया'-देशः । अयं पुरा 'एशिया'-द्वीपस्य राज्यं बभूव । संप्रति तुर्की-पर्सिया-एसियाटिकएसिया-देशेषु संमिलितः । एतद्देशस्य भाषा—अर्मीनियन्-भाषेति ।

**३. अल्बेनियन् ( Albanian )**—इयम् 'अल्बेनिया'-देशस्य भाषा या सुदृढा उपभाषा अधिकरोति । एषा 'आर्यवर्गीया' 'इण्डोयूरोपियन्-वर्गीया' वा । पुरातनः 'अल्बेनिया-' कास्पियन्-समुद्रस्य पश्चिमे तटे समवातिष्ठत ।

**४. अवेस्तन् ( अवेस्ता ) Avesta**—अवेस्ता ( अवस्ता ) [ जेन्द ] नामकस्य ग्रन्थस्य पवित्रा भाषा ईरानदेशीयस्य ।

**५. आइस्लैण्डिक् Icelandic**—अतलान्तिकसमुद्रस्योत्तरदिग्भूयिष्ठभागेऽवस्थितेन डेन्मार्कदेशेन संवद्धो विशाल आइस्लैण्डः । आइस्लैण्डवास्तव्यानां तत्साहित्यस्येयं वा भाषा । भाषाणां ट्यूटानिकपरिवारीय-स्कैण्डिनेवियन्-शाखायाः सदस्येयं सुपुरातनी सुरक्षिता । पुरा न्येयं 'पुरातन-नॉर्ज' 'नार्वेजियन्'-रूपेणावस्थिता । एतस्या यस्याः सामान्य-स्कैण्डिनेवियाभाषात्वेन ( दशम्यामेकदश्यां च शताब्द्याम् ) प्रथमतो लेख्यपत्रारूढत्वं तस्या नार्वेजियन्-स्वीडिश्-डैनिश्-भाषा आधुनिकमहाद्वीपीयानि रूपाणि । उच्चारणविधौ शब्दराशौ च प्राज्यपरिवर्तनं गताप्येषा पुरातन-आइस्लैण्डिक्-भाषाया बाह्यरूपेण सुरक्षिता । अवश्यंध्यातव्यान्यनेकानि कार्याण्यस्यां

भाषायां समनुष्ठितानि ( दशमशताब्दीतोऽद्ययावत् )। यथा—ऐतिहासिकानि, काव्यात्मकानि, अध्यात्मज्ञानविषयकाणि, अन्यानि च।

६. आयरिश् **Irish**—आयरलैण्डदेशे केल्टिकवंशीयानामियं भाषा। यद्यप्येतस्याः प्राचीनता, अपेक्षा च देशानुरागेण परम्परया च बहुसंवर्धिते तथाप्येषा कालतो भाषावैज्ञानिकमूल्यतश्च परमानिवार्या भाषा केल्टिक-परिवारीया। एतदीया वर्णमाला लातिनवर्णमालानुकृतिः। गेलिकभाषा तुलनात्मकरूपेणार्वाचीनं रूपम् आयरिश्-भाषायाः। इदं स्काटलैण्डवास्तव्यानां केल्टानां भाषितम्। समकालिक्या आयरिशभाषया मनाग् भिन्नम्। इदानीन्तनी आयरिश्भाषा बहुंशतो व्यभिचरितोच्चारणविधौ पुरातनायरिश्-तुलनया। एवं सत्यपि पुरातनवर्णविन्यासविद्यामभिरक्षति भूयिष्ठांशतः। जीविता भाषा, तीव्रं व्यवहारतो व्यपगच्छन्ती।

७. इँग्लिश् **English**—इँग्लैण्डदेशीयानां तज्जानां वा अमेरिकादिदेशस्य यूनाइटेडराज्यादीन्यधिवसतां वा भाषा।

अयं प्रयोगः प्राप्ते समये ईषद्भिन्ननिम्नजर्मनोपभाषाणां समूहस्य सामान्याभिधेयार्थमागतः, एँग्लियन् तथा सैक्सन्, ब्रिटेनस्य ट्यूटानिक-आक्रामकाणां राष्ट्रियभाषात्वेन प्रत्यभिज्ञातः। एषा भाषा सामान्यतः 'एँग्लो सैक्सन'-रूपेण विज्ञाता, नवमशताब्द्यां स्कैण्डिनेवियनाक्रमणतः, नार्मनविजयतः ( एकादशशताब्द्यां नार्मन-फ्रेंचपरिचयेन )। प्रचुराणां गम्भीराणां च परिवर्तनानां कारणेन पश्चात्कालिक्यपरभाषा 'इँग्लिश्' जाता व्यवहारतः। तदनुसारेण भाषाणां पुराणतरावस्था विभिन्नेषु कालेषु कानिचिद् विशिष्टानि नामधेयान्यवापुः। यथा—सैक्सन्, एँग्लोसैक्सन्, इँग्लिश्-सैक्सन् अथवा सैक्सन्-इँग्लिश्—एतानि नामानि नार्मन-विजयतः प्राक्; पुरातन-इँग्लिश् आहोस्वित् प्राक्तन-इँग्लिश् नार्मनविजयस्य आधुनिककालस्य च मध्यवर्तिनि काले व्यवह्रियते स्म। सामान्यो विभाग इह प्रस्तूयमानः—(१) एँग्लो-सैक्सन्, प्रामुख्यतः पाश्चात्यसैक्सन्, किन्त्वितर-एँग्लोसैक्सनोपभाषा अप्यत्र समवेताः—केन्टिश्, मेर्सियन्, पुरातन-नोर्थुम्ब्रियन्-प्रभृतयः। [ ४५० ई० ( ६०० )—११५० ( १२०० ); ] ( २ ) मध्य-इँग्लिश्, पुरातन-इँग्लिश्-रूपेणापि परिचीयमाना, द्वादशशताब्द्या मध्यभागतश्चरमभागतो वा षोडशशताब्द्या आरम्भं यावत् ( ११५० ई० ( १२०० )–१५०० ); ( ३ ) आधुनिक-इँग्लिश् उताहो साधारणतः 'इँग्लिश्' षोडशशताब्द्या आरम्भत इदानीं यावत्। भाषातत्त्वशास्त्रतः

'इँग्लिश्' मूलाकृत्यनुसारेण 'एँग्लोसैक्सन्'-मूलिकेति, एँग्लोसैक्सन्-आकृतिमादधानापि व्याकरणाकृत्यनुसारेण ट्यूटानिकवंशीयनिम्नजर्मनवर्गस्य सुस्पष्टा सदस्येति। अन्या निम्नजर्मनभाषा विद्यमानाः—पुरातनसैक्सन्, पुरातनफ्रीजिक्, पुरातननिम्नजर्मन्, अन्यानि च विलुप्तानि रूपाणि, इदानीन्तनडच्, फ्लेमिश्, फ्रीजिक्, निम्नजर्मन्-( दॉयच् )-भाषा चेति। उच्चजर्मनसहिता एता भाषाः 'प्रतीचीनजर्मनिक'-शाखां रचयन्ति यथा गाथिक्-स्कैण्डिनेवियन्-भाषे 'पूर्वीयजर्मनिक्'-शाखां ट्यूटानिकवंशीयां विदधतः।

८. कॉर्निश् **Cornish**—कॉर्नवालदेशस्य (इँग्लैण्डस्थितस्य) पुरातनी भाषा, कैल्टिकभाषाणां किम्रिकशाखाया ब्रिटिशशाखाया वोपभाषा। एषा प्रायोऽष्टादशशताब्द्या अन्ते व्यवहारत्वेन लुप्ता।

९. किम्रिक् **Cymric**—ब्रिटेनदेशीयकेल्टिकवंशीयानां किम्रिक-विभागस्य भाषेयम्।

१०. गाथिक् **Gothic**—गॉथानां ( पुरातनट्यूटानिकवंशीयानाम् ) इयं भाषा। ते व्यवजहुर्विभिन्नानि रूपाणि ट्यूटानिकभाषायाः, या संप्रति सामान्यतः स्कैण्डिनेवियनभाषया सह वर्गीकृता ट्यूटानिकवंशगतपूर्वीयशाखात्वेन। गाथिकभाषायाः सर्वे विग्रहा विनष्टा लेख्यप्रमाणविरहिताः। केवलं प्रतीचीनगॉथानां ( विजिगॉथ्स् इत्येतेषां ) कैश्चिद् भाष्यमाणा साऽवशिष्टा। ते विजि-गॉथाश्चतुर्थशताब्द्या आरम्भे देशिया (वॉलाकिया-प्रभृति)-देशानधिचक्रुः; चतुर्थशताब्द्या आन्त्यात् पूर्वं मीसिया-( Moesia ) सांप्रतिकबुल्गेरिया-देशमवसादयामासुः। रोमनसाम्राज्यं प्रति विद्रोहं कुर्वाणास्ते विस्तारयामासुः स्वकीयान् विजयान् ( गॉल-स्पेनयोरपि )। तेषां भाषा संप्रति 'मीसो-गॉथिक्' साधारणतो वा 'गाथिक्' इति कथ्यते। सा बाइबल्-ग्रन्थस्य उल्फिला-नामक-बिशपकृतस्य पूर्णप्रायानुवादस्य खण्डमयावशेषे, अन्यत्र च क्वचित् सुरक्षिता। अवशेषा एते स्फारं भाषावैज्ञानिकमहत्त्वाधायकाः। लेख्यप्रमाणात् सुपूर्वम् अविघ्नितभाषासत्तां विनिर्दिशन्तीयं भाषा प्रारम्भिकीमाकृतिं वहति। गाथिकभाषा वैदेशिकैः शब्दैर्मनाक् प्रभाविता, तत्राल्पा ग्रीक-लैटिनभाषयोरल्पाश्च प्रतिवेशिन्याः स्लावभाषाया एव शब्दाः सन्ति। एषा भाषा सामान्यतो मूलट्यूटानिकभाषासमीपवर्तिनी स्वकक्षीयासु भाषासु मूर्द्धन्या महत्त्वम् इण्डोयूरोपियनकुटुम्बीयभाषासु संस्कृतभाषावद् बिभर्ति।

११. गेलिक् **Gaelic**—स्काटलैण्डस्य हाइलैण्डमधिवसतां केल्टानामियं भाषा। गदेलिक् इति नामान्तरम्। आयरलैण्डभूमिः प्रथम आवासो गदेलिकशाखायाः। तत्रैषा षष्ठसप्ताब्द्यां स्काटलैण्डमभिव्याप्ता। ऍर्स् (Erse)-मंक्स्-(Manx) भाषयोरन्तर्गता।

१२. ग्रीक **Greek**—ग्रीसदेशीयानां भाषा। बृहदिण्डोयूरोपियन्-भाषापरिवारस्य शाखा। पुरातनी ग्रीकभाषा ग्रीसदेशे भाष्यमाणबहुसंख्यकोपभाषान्तर्गता। सा च 'लघु-एशिया'-तटे, मैडिटैरानीयन्-कृष्णसागर-तटे, सीरिया-ईजिप्टतः इटली-सिसली-स्पेन-पर्यन्तम्। एतासामुपभाषाणां चतस्रो विशिष्टाः। ताश्चेमाः—१. आयोनिक्, (Ionic), २. डोरिक् (Doric), ३. ईओलिक् (Aeolic) तथा एटिक् (Attic)। पुरातनी-आयोनिक् होमरिककाव्ये प्रकटीभवति [तच्च महाकाव्यम् (Epic) कथ्यते], नवीना आयोनिक् च हीरोडोटुस (Herodotus) इत्यस्यैतिह्येषु। डोरिक-भाषा विभिन्नोपभाषान्तर्गता। सामान्यत उपलक्षिताः—'Rough' or 'Broad' यथा एटिक्-आयोनिकाभ्यां सह विपर्यस्ताः, नामतः—डोरियन् (Dorian), लेकोनियन् (Laconian), कोरिन्थियन् (Corinthian), मैगेरियन् (megarian), देल्फियन् (Delphian), रोडियन् (Rhodian), क्रेटन (Cretan), साइरीनियन् (Cyrenian), सिराकुसन् (Syracusan)-प्रभृतयः। ईओलिक् संमिलितेह—लेस्बियन् (Lesbian), बीओतियन् (Boeotian), थेस्सालिन्-प्रभृतिषु। एथेन्सस्योपभाषा 'एटिक' इति ग्रीसदेशस्य आदर्शसाहित्यिकभाषा समजनि। प्रायशश्च ग्रीसदेशस्य समग्रं साहित्यमभिव्याप्नोति। इयं स्वपश्चात्तनरूपेण सामान्यजनभाषात्वेन ग्रीकजनानां भाषा जाता। अलैग्जेण्ड्रिया-पैलेस्टाइनयोः सामान्यभाषात्वेन पुरातनटेस्टामेण्टः प्रवर्तमानो जातोऽस्याम्; नवीनटैस्टामैण्टश्चालिख्यत।

१३. जर्मन् **German**—जर्मनीदेशस्य तन्निवासिनां वा भाषा। ट्यूटानिकभाषाया उपशाखा इण्डोयूरोपियन्-(आर्यन)-भाषाया उपशाखा वा। अस्या प्रमुखं भागद्वयम्—(१) निम्नजर्मनभाषा (उत्तरदेशस्य, आहोस्विद् देशीयनिम्नभागस्य); (२) उच्चजर्मनभाषा (दक्षिणदेशस्य, आहोस्विद् उच्चभागस्य)।

उच्चजर्मनभाषा विभक्ता त्रिषु कालेषु—१. पुरातनोच्चजर्मन (अष्टमशताब्दीतो द्वादशशताब्दीपर्यन्तम्); २. मध्योच्चजर्मन् (द्वादशशताब्दीतः

षोडशशताब्दीं यावत् ), ३. नवीनोच्चजर्मन् अथवा आधुनिकजर्मन् आहो-स्विद् जर्मन् ( षोडशशताब्दीत इदानीं यावत् ।

· निम्नजर्मन्भाषाप्यैतिहासिकरूपेण विभक्ता त्रिषु कालेषु—१. पुरातन-निम्नजर्मन्, २. मध्यनिम्नजर्मन्, ३. आधुनिकनिम्नजर्मन् इति । त्रयाणा-मेव कालानां समय उच्चजर्मनवज्ज्ञेयः ।

१४. जापानीय- Japanese—जापानदेशीयानां ( तन्निवासिनां वा ) भाषा । इयं संश्लेषणात्मिका ( Agglutinative ) भाषा । प्रायशोऽभि-युक्ता संदिह्यमानेषु स्थलेषु 'उराल-अल्ताइक्' ( Ural-Altaic )-परिवारं संबन्द्धुम् । यथा विशेषतो 'मंगोल-मञ्चू' इत्येताभ्यां संबद्धा ।

१५. जिप्सी Gypsy ( रोमानी )—काकेशियनवंशः । यस्य जातयः ( tribes ) मूलतो भारतात् समागत्य यूरोपं च प्रविष्टाश्चतुर्दश्यां पञ्चदश्यां वा शताब्द्याम् । संप्रति ताः तुर्किश-, रशिया-, हंगरी-, स्पेन-, इँग्लैण्ड-प्रभृतिदेशेषु विकीर्णाः । तासां राम > रोम > डोम-नामानि । एतदीया भाषा भारतीया भाषा विभिन्नासूपभाषासु विभक्ता या यूरोपियनभाषाणां मिश्रणेन प्रादुर्भूताः । ईजिप्सियन्-शब्दाद् आद्याक्षरलोपेन ( by apheresis ) जिप्सी-संज्ञा जाता । विभिन्नेषुदेशेष्वेतेषां विभिन्नानि नामानि जातानि । स्पानिश्, पुर्तगाली—**गितानो**, (=इँग्लिश्—**ईजिप्सियन्**), नवीनग्रीकभाषा-याम्—**गुफ्तोस्**, तुर्किश्—किब्ती, (=इँग्लिश्—कोप्त्, ईजिप्सियन्); अल्बेनियन्—जेव्क् ( ईजिप्सियन् ), हंगेरियन्—**फराओ**, मध्यलैटिन्—**नुबिआनी**-प्रभृतीनि । ते सरासेन्स् ( Saracens ) नाम्नापि प्रथिताः । फ्रेञ्चनामधेयमस्ति—बोहीमियन् ( Bohemien ), ( इँग्लिश्—बोहेमियन् Bohemian ); स्वीडिश्—**ततारे**, डैनिश्—**तातेर्**, **तातार्**, **ततॉर** ), वेल्श्—क्रुइड्रिआड् (Crwydriad, Crwydryn)-प्रभृतीनि । सुप्रसृतम-भिधानम् इतालीभाषामयम्—**जिंगारो** ( Zingaro ), जिंगानो ( Zing-ano ) । अरबिकभाषामयं नामधेयम्—**'करामी'** इति, पर्सियन्—**कराची** **Karachi** इति । जिप्सीनामधेयम् अस्ति रोम ( =मानवः ), अतस्तदीया भाषा रोमानी प्रोच्यते ।

१६. डच् **Dutch**—ट्यूटानिक् आहोस्वित् जर्मनिक्-भाषा । नीदरलैण्डेषु भाष्यते । तस्या विभिन्नाः सन्त्युपभाषाः । हालैण्डीयभाषा ( यांशतो बेल्जियमभागेषु भाष्यमाण-फ्लेमिश्भाषातो भिन्ना ) कथ्यते—निम्नडच् इति ।

१७. डेनिश् **Danish**—डेन्मार्कसंवद्धा डेनानां भाषा; स्कैरिडनेवियनोपभाषा। नार्वेजियन्-आइस्लैरिडक-स्वीडिश-स्वजातीया।

१८. तुर्किश् **Turkish**—तुर्काणां भाषा। उराल-अल्ताइकभाषापरिवारस्य सदस्या या वह्वीरूपभाषा दधाति। इयं सामान्यतः अरविकवर्णमालया लिख्यते।

१९. पर्सियन् **Persian**—इरडो-आर्यनभाषापरिवारस्य ईरानियन्-शाखायाः सदस्या पर्सियादेशे भाष्यमाणा। आधुनिकपर्सियनभाषा-कालः प्रायः १००० खिस्ताब्दतः। पुरातनतरोपभाषा ( dialects ) अवेस्ता उतवा जेन्द इति। सा कीलाक्षरेषूत्कीर्णा ( Cuneiform inscriptions )।

२०. पश्तो **Pushto**—अफगानानां भाषा। इरडोयूरोपियनभाषापरिवारस्य इरानियनवंशीया भाषैषा।

२१. पोलिश् **Polish**—पोलैरडदेशीयपोलानां भाषेयम्। एषा स्लाविक्-भाषा पश्चिमीयभागमभिव्याप्नोति। प्रायशो वोहीमियन् (Czech)-भाषासंवद्धा। कोटिसंख्याकजनैर्भाष्यमाणा पश्चिमीयरूसदेशे, पूर्वीयप्रसियादेशे पूर्वीय-आस्ट्रियादेशे चेति।

२२. प्रशन् **Prussian**—आर्यपरिवारस्य स्लावो-लैटिकशाखाया लेटिश्-विभागमभिसंवद्धा भाषा। सामान्यतश्च कथ्यते—'पुरातनप्रशन्' इति। एषा निम्नतरविश्चुला ( Vistula )-नीमन-( Niemen )-योर्मध्ये भाष्यते स्म। षोडशशताब्द्याम् आहोस्वित् सप्तदश्यामवसन्ना जर्मनैः पुनः स्थापितापि।

२३. फ्रिजियन् **Frisian**—फ्रीजलैरडदेशे भाष्यमाणा भाषा। एषा फ्रीजिक् ( Friesic ) इत्यपि कथ्यते। एतस्या पुरातनतमो विग्रहः—पुरातनफ्रीजिक् अस्ति निम्नजर्मनोपभाषा। सा पूर्वम् उत्तरीयभागे जर्मनीदेशस्य तस्मिन् मरडले व्यवह्रियते स्म यत् संप्रति सांप्रतिकफ्रीजलैरडमभिसंवध्नाति।

२४. बल्गेरियन् ( बुल्गारियन् **Bulgarian** )—कृष्णसमुद्रात् पश्चिमस्यां स्थितस्य वल्गेरियादेशस्य पुरातन-वल्गराणाम् आहोस्वित् स्लाविक्-बल्गेराणां भाषा। इयम् उपभाषाद्वये विभक्ता—पुरातनबल्गेरियन् ( या कथ्यते चर्चस्लाविक् उताहो स्लावोनियन् इत्यपि ), तथा नवीन-बल्गेरियन् इति। प्राक्तनी भाषैषा सुसमृद्धोत्तमा च स्लाविकभाषाणां किन्तु व्यवहारभाषात्वेनावसन्ना।

२५. **बोहीमियन् Bohemian**—आर्यपरिवारस्य स्लाविक्-शाखायाः सदस्या बोहीमियादेशस्य पुरातनी भाषा च।

२६. **ब्रेटानिक् Bretanic**—ब्रेटॉन-( उत्तरपश्चिमीयफ्रांसस्य पूर्व-प्रदेश- ) देशस्य भाषा ब्रिटानियानाम् ( आर्मोरिक् )।

२७. **रशन् Russian**—स्लाविक्-भाषा दक्षिणपूर्वीयशाखामभिसंबद्धा ( या बल्गेरियन्-भाषामपि समावेशयति )। एतस्याः प्रमुखो विग्रहो बृहद्-रशन् इति। अन्ये महत्त्वपूर्णे उपभाषे इमे—लघु-रशन्, श्वेतरशन् इति।

२८. **रूमेनियन् ( रूमानियन् ) Rumanian**—रोमान्स्-भाषा। दक्षिणपूर्वीय-यूरोपराज्यं रूमानियेति प्रसिद्धमभिसंबद्धा। एषा आस्ट्रियन्-राज्यस्य, वेस्सरवियाराज्यस्य पिण्डुसराष्ट्रस्य च समीपवर्तिभागेष्वपि भाष्यमाणा।

२९. **लातिन् Latin**—पुरातनरोमदेशस्य भाषा। मूलतो लैटिउम्-स्थाने भाष्यमाणा। पश्चात् रोमन्-राज्यमभिव्याप्ता। मूलाधारैषा आधुनिक-रोमान्स्भाषाणाम्। प्रभूतांशश्चाङ्गलभाषायामेतदीयशब्दकोशस्य लभ्यते। एषार्यपरिवारस्य ( इण्डो-यूरोपियन् इत्यस्य ) इटालियन्शाखामभिसंबद्धा 'ओस्कन्' 'उम्ब्रियन्'-प्रभृतिभाषाभिः सहिता, अन्याभिश्चोपभाषाभिर्या अवसन्नप्रायाः। एषा पञ्चकालेषु विभक्ता—१. पुरातनलैटिन्, २. श्रेष्ठ-( Classical ) लैटिन्, ३. विगता ( late ) लैटिन्, ४. मध्यलैटिन्, ५. नवीनलैटिन् चेति।

३०. **लिथुआनियन् Lithuanian**—लिथुआनियादेशस्य भाषा। आर्यपरिवारस्य शाखा। सामान्यतश्चैषा—लेट्टिक् उताहो लेट्टिश् इति व्यवह्रियते। भूयिष्ठांशतश्च स्लाविक्समीपवर्तिनी तज्जातीया च। पश्चिम-रसियादेशस्य पूर्वीयप्रसियादेशस्य च भागेषु भाषा इमा भाष्यमाणाः।

३१. **वेण्डिश् Wendish**—स्लाविक्वंशीयवेण्डानां ल्यूसेशिया ( Lusatia )-निवासिनां भाषा ल्यूसेशन् इति। वेण्डिक् इत्यपि कथ्यते।

३२. **वेल्श् Welsh**—वेल्शानां भाषा। केल्टिकपरिवारस्य सदस्या। संप्रत्यस्याः कार्निश्-शाखा किम्रिकवर्गस्यावसन्ना।

३३. **सर्वियन् Servian ( Serbian )**—स्लाविक्-भाषा। सर्विया-बोस्निया-हेर्त्सेगोविना-मोन्तेनेग्रो-दाल्मेशिया-क्रोटियाप्रभृतिषु भाष्य-माणा। सोपभाषा या क्रोटियादेशे भाष्यते प्रायशः क्रोटियन्

इत्यभिधीयते । संपूर्णः संव उपभाषाणां कस्मिंश्चिदवसरे सेल्टों-क्रोटियन् इत्युच्यते ।

३४. स्काटिश् **Scottish**—स्काटलैण्डदेशीयैर्जनैर्भाष्यमाणा आङ्गल-भाषाणामुपभाषास्ताः स्काच् इत्यपि निगद्यन्ते ।

३५. स्लावोनिक् **Slavonic**—( स्लावोनिया-देशस्य ) स्लावानां भाषा । स्लाविक् इत्यपि कथ्यते ।

३६. स्वीडिश् **Swedish**—स्वीडानां भाषा । स्कैण्डिनेवियन्-उपभाषेयम् । नार्वेजियन्-डैनिश्-आइस्लैण्डिक्-जातीया ।

३७. हंगेरियन् **Hungarian**—हंगेरियाणां भाष्यमाणा भाषा । भाषाणां फिन्निक्-परिवारमभिसंवद्धा ।

---

# विषय-सूची

| विषयः | | | पृष्ठ-संख्या |
|---|---|---|---|

# व्याकरणप्राशस्त्यम्

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ॥
तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥

वाक्यपदीयम् १,११,१४,१६ ।

# अविसोढम्

पितृव्यमातुलमातामहपितामहाः ४. २. ३६ इति पाणिनीये निपातनसूत्रे वार्त्तिकमिदं पञ्चममुपन्यस्तं महाभाष्यकारेण । अविशब्दाद् दुग्धार्थे सोढ, दूस, मरीसच् इत्येते त्रयः प्रत्यया भवन्तीति तदर्थः। अवेर्दुग्धमित्यर्थेऽविशब्दात् सोढ, दूस, मरीसच् एते प्रत्यया वक्तव्या इति बालमनोरमाकारः,[१] तन्न समीचीनम्, अविशब्दस्य पञ्चम्यन्तत्वात्, महाभाष्यकारव्याख्यानस्य तथाऽसत्त्वात्, शाकटायनव्याकरणे 'दुग्धेऽवेस्सोढदूसमरीसम्' इति सूत्रस्य सत्त्वाच्च ।

मर्षणार्थकात् √सह-धातुतो निष्ठायां क्ते सति सोढशब्दनिष्पत्तिः। अयमेव सोढशब्दः 'सुखादिभ्यः कर्तृवेदनायाम्' ३. १. १७ इति पाणिनीयस्य सूत्रस्य गणपाठे दृश्यते । वाकरनागल-महाशयो वेनफाइ-संस्कृतकोशानुसारेण २४४=kl. सोढ-प्रत्ययं (अथर्ववेदे साढ—v. अ-पाढरूपेणोपन्यस्तं) √सह-धातुसंबद्धं प्रख्यापयति[२] । दुग्धार्थे क्वाप्यनुपलम्भान्नायं सह-धातुनिष्पन्नः सोढशब्दः शक्यते स्वीकर्तुम् 'अवि-सोढम्' इत्यत्र दुग्धार्थकसोढप्रत्ययतया ।

सोढप्रत्ययः 'ऊधस्' इति शब्दस्य रूपान्तरम्—ऊधस् > ऊढस्[३] > सूढ

---

१. वैयाकरणसिद्धान्तकौमुदी, १२४२ सू०; ३०७ पृ० (गिरिधरशर्मचतुर्वेद-परमेश्वरानन्दशर्मसंपादिता)।

२. ७६३ सोढ lehrt V. 5 zu P. 4. 2. 36 als Suffix (Pat. dazu) in dem unbelegten अवि-सोढ—"Schafmilch"; nach Benfey 2.44=kl. सोढ—(für Av. साढ–v. अ-षाढ–) von सह्—"uberweltigen"

—Jakob Wackernagel : altindische Grammatik, Band II, 2; Pages 927.

३. प्राकृतभाषायामयम् 'ऊह'-रूपेणोपलब्धः स्तनार्थकः (विपाकश्रुत–१, २)। कश्मीरभाषा–वुयु=ऊधस्, सिन्धी—ओहु=ऊधस्, आसामी—उहार्=पशूधस्, भोजपुरी—ओयर्=उरः, पु. मराठी—वोह=उरः, ऊधस्, वैगाली (काफिरी)—ऊड़, ऊढ़=ऊधस्, प्रसुन् (काफिरी)—इरे, वोटपूरी (दर्दिक्)—वोड्, शुमस्ती (शुमास्ती-दर्दिक्)—ओड़े, गवर्वती (दर्दिक्)—

>सोढ-इति। आइस्लैण्डिक-भाषाया जू( ग् )र-शब्द ऊधोऽर्थकः कादाचिकः *'जुड्र' इति स्थाने[१]। भारोपीयभाषायां मूलशब्दः 'ऑइध्-,ओउध्-, ऊध्-चेति। ग्रीकभाषायाम्—ओउथार्=ऊधस्, लातिनभाषायाम्–ऊवेर्=ऊधस्। अस्मिन्नेवार्थे म० उ० जर्मन्—ऊतर्, यूतर (ūter, iuter); पु० सैक्सन्, एँग्लो-सैक्सन्—ऊदर् (ūder) इति। स्वरपरिवर्तनक्रमेणायं *यूद्र् (*eudr); आइस्लैण्डिक-भाषायाम्—जू (ग्) र् (jū (g) r) इति, एँग्लोसैक्सन्—येदर् (ieder), पु० फ्रिशियन्—यादर् (iāder) इति[२]। जर्मन्—ऑइतेर् (euter), म० इँग्लिश्—उड्डिर् (uddir), स्वीडिश्—जुफ्वेर्; जुर्, डैनिश्—य्वेर् इति[३]।

लिथुआनियन्—ऊद्रुओ-जु,-ति=ऊधस्। स्लावोनिक्–*vyme;... व्यमे (výmě), स्कोटिश्—वीमे=ऊधस्(víme)। तुल० रूसीयभाषा—उदित (údite) अथवा 'उदेत' (údete)=उच्छूनतायाम्, वृद्धौ।[१]

क्लिन्नता-(शैत्य)-वाचकोऽप्यूधस्-शब्दः[४]—अवेस्ता—अओदर् (aodarə)। जलार्थेऽपि[५] अवेस्ता—उद्र (udra), ग्रीक—उद्रोस् (ύδρος)। ऋग्वेदे 'ऊधस्' इति शब्दो मेघवाचको[६] जलवाचको[७] दुग्धाधारवाचको[८]

---

वोड् इति (संस्कृतानुवादः)
—R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages, 2403.

१. Skeat : An Etymological Dictionary of the English Language, Pages 672.

२. Julius Pokorny : Indogermanisches etymologisches Wörterbuch, Pages 347.
अभि सोममूधः—ऋ. ४.२३.१ = उद्धतम्, अतिप्रवृद्धम् [ सायणः ]।

३. Webster's New International Dictionary, Pages 2261.

४. Alois Walde : Lateinisches etymologisches Wörterbuch, Pages 851.

५. तदेव, ८५० पृ०।

६. यदूधरप्यापयो दुहुः—ऋ० २.३४.१०=उद्धतं मेघम् [ सायणः ]।

७. अरंह ऊधः पर्वतस्य वज्रिन्—ऋ.५.३२.२ = जलम् [ सायणः ]।
दुदुहे प्रश्निरूधः—ऋ. ५.६६.१ = जलम् [ सायणः ]।

८. ऊधर्न गोनां स्वाद्मा पितूनाम्—ऋ. १.६९.२ = गोसंबन्धि पयसं आश्रयभूतं स्थानमिव [ सायणः ]।

दुग्धवाचको[1] रात्रि-( शैत्य )-वाचको[2] रसवाचकः[3] सारवाचको[4] योनि[5]-वाचकश्चेत्यर्थसांगत्यं सुस्पष्टम्। लिथुआनियन्-भाषायां ( रक्त)-रसार्थकः—वेदरस् ( védaras ) इति[3], लेट्टिश्-पु० प्रशियन्-भाषयोश्चोदरवाचकः; लेट्टिश्—वेदर्स् ( vedars ) इति, पु० प्रशियन्—वेदेर्स् ( weders ) इति[6] । ( तुलनी० ऋ. ८.३१.६ ।

पालिभाषायां शिलास्थितनैसर्गिकतडागवाचकः शोण्डो[7]-शब्दो दुग्धार्थक-सोढप्रत्ययमूलमित्यपि न हृदयावर्जकम्, तस्य संस्कृतभाषास्थशौण्डशब्दोद्भवत्वात्, शौण्डशब्दस्य तथात्वे च प्रमाणाभावात्।

पश्तोभाषायां 'शीदे' इति शब्दो दुग्धार्थकः। तत्रैव शीरशब्दोऽपि दुग्धवाचकः समास एव[8]। अयं शीरशब्दः प्रव्यक्तं क्षीरशब्दसंबद्धः। तुर्किश-

---

१. शुच्यूधो अतृणन्न गवाम्—ऋ० ४.१.१९=गवाम् ऊधः शुचि शुद्धं पयः, न अतृणत् = न दोग्धीत्यर्थः [ सायणः ]।
सोममूधः—ऋ० ३.४८.३=ऊधसि क्षीररूपेण स्थितम् [ सायणः ]।
पितुश्चिदूधर्जनुषा विवेद व्यस्य धारा असृजद्वि धेनाः—ऋ० २.१.९—ऊधसः= पयसः, धाराः [ वागीशः ]। सायणस्तु—अस्य ऊधसः सम्बन्धिन्यः धाराः= पयोधारा इति।

२. उपसीददूधः—ऋ० १०.६१.९=रात्रिनामैतत्। रात्रावपि [ सायणः ]।

३. दुहन्त्यूधरुपसेचनाय—ऋ. १०.७६.७=रसं सोमसंबन्धिनम् [ सायणः ]।
Lit. Védaras, "mit Blut oder Grütze gefüllter Wurstmagen "—Alois Walde : vergl. Wörterbuch, I Band, P. 111.

४. अधयन् मातुरूधः—ऋ. १०.३२.८=सारभूतं सोमादिकं हविः [ सायणः ]।

५. समूधो रोमशं हतः—ऋ. ८.३१.९=योनिम् [ सायणः ]।

६. Lett. vedars, apr. weders "Bauch"—Alois Walde : vergleichendes Wörterbuch, I Band, P. 111.

७. जातक १.४६२ ( द्र० P. T. S. Pali-English Dictionary. )

८. शीदे ( Shidey ) s. f. (9th) Milk.
शीर् ( Shir ), s. m. (9th) Milk, only used in composition, as शीर-ख्वार, adj. A suckling, an infant; (Fem.) शीर-ख्वारा. शीर-गर्म, adj. Milk warm, lukewarm. शीर-मस्त, adj. A fine plump suckling, a fatling; ( Fem. ) शीरमस्ता.
—A Dictionary of the Pushto Language, Pages 666.

राज्ये प्रयुज्यमानजिप्सी-( रोमानी )-भाषायां 'तुत, सुत, सोउत, छुति, चेति चत्वारः शब्दा दुग्धार्थकाः[1] । ब्राउनमहाशय एतेषां संबन्धं तुर्किश-शब्देन 'सुद' इत्यनेन साधयितुं प्रायत्यत[1] ।

एवमार्यभाषास्रोतस्कत्वेऽपि सोढशब्दस्य, तमिलभाषायां 'शौर'-धातुरश्रु-रक्त-दुग्धानां प्रवाहरूपेण प्रयुज्यते । तत्रैव 'शोर्व्' ( शोड्' )-शब्द ऊधसः स्थानात् स्वयं प्रवाहरूपागतदुग्धार्थकः । कन्नडभाषायां तु 'सौर' इति धातुः संज्ञा च । धातुः पातनार्थकः संज्ञा च फलरसार्थिका[2] ।



---

१. tut, sut, Br. sout; Bor. chuti—This word mr. Brown designates as Turkish sud (सुद्) 'milk'. But the comparison of the three terms gives a better explanation of their etymology.

—A. G. Paspati : On the Language of the Gypsies ( as now used in the Turkish empire ). J.A.O.S.; Vol. VII.

२. २३५३ तमिल Cōr ( शोर् ) To trickle down as tears, blood or milk. Corv ( शोर्व ), [ Cord ] ( शोड्' )—( milk ) streams from udder by itself. कन्नड—Sōr ( सौर् )—To drop, juice of fruit.

—T. Burrow & M. B. Emeneau : A Dravidian Etymological Dictionary.

# अविदूसम्

पितृव्यमातुलमातामहपितामहाः (४.२.३६) इति पाणिनीये निपातनसूत्रे वार्त्तिकं पञ्चममुपन्यस्तं महाभाष्यकारेण—'अवेर्दुग्धे सोढ-दूस-मरीसचः' इति। दुग्धमित्यर्थेऽविशब्दात् सोढ, दूस, मरीसच् एते प्रत्यया वक्तव्या इति तदर्थः (द्र० अविसोढशब्दः)। उदाहरणानि च—अविसोढम्, अविदूसम्, अविमरीसम् इति प्रदर्शितवान् महाभाष्यकारः।

भगवता पतञ्जलिना वार्त्तिककारोक्तेषु त्रिषु प्रत्ययेषु न कापि चर्चा कृता। यद्यपि संस्कृतवाङ्मये नैतेषां सोढ-दूस-मरीसच्-प्रत्ययविशिष्टानां शब्दानां क्वापि प्रयोगो लभ्यते यथागवेष्ये तथापि महाभाष्यकारेण तट्टीकाकाराभ्यां च कैयटनागेशाभ्यां नैतदीयमनभिधानमुक्तम्। नागेशेन कैयटस्य 'एवं दूसमरीसयोरपि षत्वाभावः सकारस्य' इत्युक्तेः 'एवं दूस—' इति प्रतीकव्याख्याने[1] 'अविदूः'—सदृशानां प्रयोगाणामभिधाने दृढतरमानाभावो नूनं प्रदर्शितः।

पाणिनीयव्याकरणमधिकृत्य टीकाग्रन्थेषु प्रक्रियाकौमुदी नोरीकरोति वार्त्तिकमिदम्। मुग्धबोध-जैनेन्द्रव्याकरणयोरपि नैतेषां प्रत्ययानां विवरणम्। अमरकोशोऽपि जहाति तत्प्रत्ययान्तशब्दान्। पाल्यकीर्त्यादयो[2] वार्त्तिकमिदं स्वस्वपद्धत्या ग्रथ्नन्ति व्याख्यान्ति च। तत्र सर्वत्र महाभाष्यमेवानुकृतमिति सुस्पष्टम्। केवलं संक्षिप्तसारव्याकरणे सोढदूसमरीसप्रत्ययान्ताः शब्दाः पुंल्लिङ्गे दर्शिताः[3]।

---

१. अविसोढम्—षत्वं सकारोच्चारणसामर्थ्यान्न भवति, अन्यथा षोढप्रत्ययं प्रक्रियालाघवार्थं कुर्यात्। एवं दूसमरीसयोरपि षत्वाभावः सकारस्य—कैयटः (महाभाष्यम् ४. २. ३६)।

एवं दूसेति। न च ण्यन्तात् क्विपि 'अविदूः' इत्यादौ सकारस्य चारितार्थ्यम्; तेषामभिधाने दृढतरमानाभावादिति भावः—नागेशः (महाभाष्यम् ४. २. ३६)।

२. दुग्धेऽवेस्सोढदूसमरीसम्—२. ४. १८७ ङसन्तादविशब्दाद् दुग्धेऽर्थे सोढ-दूस-मरीस-प्रत्यया भवन्ति—शाकटायनव्याकरणम्।

अवेर्दुग्धे सोढदूसमरीसचः—सरस्वतीकण्ठाभरणम् ४. २. ८३।

अवेर्दुग्धे सोढदूसमरीसम्—श्रीसिद्धहेमशब्दानुशासनम् ६. २. ६४।

३. अवेस्तद्दुग्धे सोढदूसमरीसाः (तद्धितपरिशिष्टे ४४ सूत्रम्)—अविसोढः, अविदूसः, अविमरीसः—संक्षिप्तसारव्याकरणम्।

आधुनिका गुणदोषविवेचनशीला भाषाविदो वॉप-ग्रुग्मान्-वरो-प्रभृतयो नैतेषां प्रत्ययानां तदन्तशब्दप्रयोगाणां च विषये किमपि व्याख्यातवन्तः। केवलं जाकोव-वाकरनागल-महाशयेन त्रयोऽपि प्रत्ययाः पालिस्रोतस्काः प्राकृतभाषास्रोतस्का वा प्रतिज्ञाताः। तत्प्रत्ययान्तानां प्रत्ययानां वा प्रयोगविषये मौनमेवावलम्बितम्। तत्र पालिभाषादिस्रोतस्कत्वे नोपस्थापितः कोऽपि हेतुरूकारानन्तरवर्तिनः सकाराद् ऋते। तेन वेनफाई—महाशयोद्धृताथर्ववेदीयो दूषिका—(नेत्रमलवाचक)—शब्दस्तुलनार्थं गृहीतः। न विहितं किमपि व्याख्यादिकम्[1]।

कुत एते महाभाष्यकारप्रभृतयस्तूष्णीम्भावमास्थिताः? सकारगर्भेषु सोढ-दूस-मरीसच्-प्रत्ययेषु चित्स्वरार्थं चकारग्रहणमित्यादिकमपि विवेचनं केनापि न कृतम्। पालिप्राकृतभाषयोरपि नैतादृशः क्वापि प्रयोगो व्याकरणे साहित्ये वा लब्धप्रचारः।

सोढ-दूस-मरीस-शब्दा दुर्व्याख्येयत्वात् प्रत्ययत्वेन ताद्धिते निपातनसूत्रे वार्त्तिकोपात्ताः। वस्तुतस्तु नात्र तद्धितविषयता, षष्ठीतत्पुरुषत्वात्। दुग्धार्थकेनानेन शब्देन सहाविशब्दस्य समासः—अवेर्दूसम्—अविदूसम् इति।

स्काटिश्—भाषायां √दुश् इति धातुः 'अभ्याहनने मेषादिकृतं' प्रयुज्यते[2]। पश्तोभाषायां दूर्नाई (durṛna'i) इति शब्दो दोहनी (=दुग्धघटी,—अर्थे दृश्यते; दो-शर्ला किंवा दो-शरला (do-sharala'h) चेति शब्दो द्विहायन्यां मेष्यां दृश्यते[3]। सिन्धी-भाषायां 'दोसो' इति शब्दो निह्नुते खर्जूर-

---

१. 545.—दूस lehrt V. 5 zu P. 4. 2. 36 als Suffix (Pat. dazu) für das unbelegte अवि-दूस "Schafmilch" (vgl. मरीस § 614,—सोढ–§763); das स् nach ऊ erweist mittelindischen Ursprung; Benfey 237 vergleicht Av. Vs. दूषीका–kl. दूषिका–" Unreinigkeit des Auges "Lex. दूष्य–" Eiter"; s. auch § 259aδ.

—Jakob Wackernagel : altindische Grammatik, II, 2.

२. To dush, v. a. To push as a ram, ox, &c.—John Jamieson : Dictionary of the Scottish Language.

३. durrna,ī, s. f. (6th) a milk-pail (of earthenware), a vessel for holding milk. do-Sharla'h or do-Sharala'h, s. f. (3rd) An ewe or she-got of two year's old.

—Captain H. G. Raverty : A Dictionary of the Pushto Language, Pages 478.

(-फल ?-)-रसे प्राप्यते[1]। पूर्वीयबाल्टिकरोमानी-( जिप्सी )-भाषायां खलु 'दोश्' इति धातुः प्रपूरणार्थकः (To milk); दोशिपे=दोहनम्। प्रपूरणमिति[2]। जूल्स्-ब्लाख-प्रभृतयो विद्वांसो रोमानी-( जिप्सी )-भाषाया मूलं संस्कृतभाषेति मन्वते।

प्रयोगालाभे तथ्यान्वेषणशीलैर्विद्वद्भिः प्रत्ययोऽयं प्रत्ययान्तश्च शब्दोऽवास्तविक इति मेने। अविदुग्धार्थकाः कल्पद्रुकोशोक्ता अवि-रिशम्, अवि-रीशम्, अवि-सोढम् इति त्रयः शब्दाः। एषु त्रिषु द्वौ महाभाष्यभिन्नाविति दूसो वा रिसो वेति द्वापरः पूर्वीयबाल्टिकजिप्सीभाषामयेन शब्देन निराकृतः।

यद्यपि संस्कृतभाषायां प्रयुज्यमानात् पटकुटीरवाचकाद्[3] दूष्यशब्दादस्योद्भवः, जिप्सी-जातीयानां यायावरत्वात् पटकुटीराणामत्यपेक्षणीयता, तद्वर्णसादृश्येन मेष्या दुग्धे प्रयोगस्तथापि तत्र भाषायां दूष्यशब्दस्य पटकुटीरवाचकत्वाभावान्नायं स्वीकर्तुं युज्यते। जिप्सीभाषामयो 'दोश्' इत्ययं धातुः सामान्यतः प्रपूरणार्थक इति मेष्या अजाया वा पयसि नैष रूढः।

दुग्धवाचकाद् ऊधस्[4]—शब्दाद् ऊधस् > धूस > दूस इत्येवं रीत्या विकासो यद्यपि नासंभवस्तथापि नायं पूर्णतो मनस्तोषकारकः, प्रमाणशृङ्खलाभावात्।



---

१. दोसो, s. m. The juice extracted from the date fruit.
—Captain George Stack : Dictionary Sindhi & English.

२. doś ii To milk.
dośipe, m. Milking, drawing milk.
—Dr. Jan Kochanowski : Gypsy Studies ( Glossary of Eastern Baltik Romany ) Pages 384.

३. 6502 दूर्श—n. 'some kind of course cloth' Av., दुष्य, दूष्य—n. 'fine cotten cloth', BHSii 268, दूश्य—n. 'tent'.
—R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages.
दूष्यं यद् वस्त्रवेश्म च—कल्पद्रुकोशः ५३, ३०१।

४. द्र० ऋ० ४.१.१९; ३.४८.३।

# अविमरीसम्

पितृव्यमातुलमातामहपितामहाः (४. २. ३६) इति पाणिनीये निपातनसूत्रे पञ्चमं वार्त्तिकमिदं कात्यायनीयमुपन्यस्यति महाभाष्यकारः। अविशब्दाद् दुग्धार्थे मरीसच् प्रत्ययो भवतीत्यर्थः। महाभाष्यकृता तूदाहरणमात्रं दत्तम्—अविमरीसम् इति। अस्य सम्बन्धे न केनापि पौरस्त्येन[1] पाश्चात्येन वा भाषाविदा समालोचि मनागपि। कैयटकृतं मूर्द्धन्यषकारशङ्कासमाधानं अविदूसशब्दे विलोकनीयम्।

अविः खल्वजाविशेषः। अजायाश्च दुग्धमपवित्रं दुर्गन्धं च। अवी रजस्वलापि प्रोच्यते। सा मलिनी। मलिनपर्यायवाचको मलीमस–शब्दः। द्वितीयमकारलोपे सति मलीस>मरीस इति जायते। इयं कल्पना नैतिह्यप्रमाणपुष्टा, मलीमस–शब्दस्य दुग्धार्थवाचकत्वाभावात्। पशुचारणभूम्यर्थको मलीश[2]–शब्दः सुआहिलीभाषामयः सन्तोषाय नैवालम्। मलिशो[3]–शब्दोऽपि गोमेषादिचारणस्थानार्थकस्तथा।

म॰ आँग्लभाषायां स्तन्यवाचको मिल्क्–शब्दः। तत्र मिल्क् (milk), म्य्ल्क् (mylk), मेल्क् (melk), मुल्क् (mulc) इति चत्वारः शब्दाः; <एँग्लो-सैक्सन्-भाषायां 'मेओल्क्' (meolc), मेओलुक् (meoluc) इति शब्दद्वयी;=पु॰ फ्रिजियन्–भाषायां मेलोक् (melok)=डच्–भाषायां मेल्क् (melk)=म॰ नि॰ जर्मन्-भाषायां नि॰जर्मन्–भाषायां च मेल्क् (melk)=पु॰ उ॰ जर्मन्–भाषायां मिलुह् (miluh), म॰ उ॰ जर्मन्-भाषायां मिलिश् (milich), मिल्श् (milch), जर्मन–भाषायां मिल्श् (milch)=आइस्लैण्डिक-भाषायां म्जोल्क् (mjólk)=स्वीडिश् भाषायां म्जेल्क् (mjölk)=डैनिश्-भाषायां मेल्क् (melk)=गाथिक-

---

१. अविसोढम् अविदूसम् अविमरीसम् इति सोढादीनि शब्दान्तराण्यविक्षीरविषयाणि—चान्द्रव्याकरणम् ३.१.६०।

२. मलीश Pasture ground.—Dr. L. Kraft : A Dictionary of the Suahili Language.

३. मलिशो, सु (य)—Pasturage, place where cattle may feed or graze.—तदेव पुस्तकम्।

भाषायां मिलुक्स ( miluks ), मिल्क ( milk ); तुल० आयरिश्--मेल्ग् ( melg )=पु० बुल्गा. म्लेको ( mleko )=पोलिश् ; बोहेमियन्--म्लेको ( mleko )=सर्वियन्-भाषायां म्लिजेको ( mlijeko ) =रसन्-भाषायां मोलोको ( moloko )=वेण्डिश्-भाषायां म्लोको ( mloko ), मेलौक ( melauka )। इमानि सर्वाणि रूपाणि ट्यूटानिक-प्रकाराणि प्रचलित-गकारस्य कृते ककारवन्ति भारोपीयभाषायाः सामान्यधातोर्व्युत्पादितानि। तद् यथा—एँग्लो-सैक्सन्-भाषायां मेल्कन् ( melcan ), [ परोक्षभूते मील्क् ( mealc ), निष्ठायां च मोल्केन् ( molcen ) ]=डच्-भाषायां मेल्केन् ( melken )=म० नि० जर्मन्-भाषायां निम्न-जर्मन्-भाषायां च मेल्केन् ( melken )=पु० उ० जर्मन्-भाषायां मेल्शन् ( melchan ), म० उ० जर्मन्-भाषायां मेल्शेन् ( melchen ), मेल्केन् ( melken ), जर्मन्-भाषायां मेल्केन् ( melken )। ककारान्तो धातुर्निर्बलः पश्चात्तनः, आँग्ल-भाषायां मिल्क् ( milk )=पु० फ्रिजियन्-भाषायां मेल्क ( melka )= आइस्लैण्डिक्-भाषायां म्जोल्क ( mjölk ) प्रभृतयो नामधातवः। मार्ज-नार्थको घर्षणार्थको वा धातुः संस्कृत-भाषायां √मर्ज् ( मृजूष् ) इति जेन्द-( अवेस्ता )-भाषायां च मरेज् ( marez ) इति[१]।

पुरातनोच्चजर्मनभाषाया मेल्शन् इति प्रपूरणार्थकस्य धातोर्मूलार्थस्त्वा-हननात्मकः। इदमाहननं गवादिदोहने प्रयुज्यत एव। अयं ट्यूटानिक आधारो मल्क इति यूरोपीय-मल्ग-शब्दम् आहननार्थकं दुग्धार्थकं च निर्दिशति, आर्याणां च 'मर्ग' इति शब्दं पूर्वोक्तार्थकम्। लिथुआनियन्-भाषाया मिल्स्जति-धातुरप्याहननार्थको दुग्धार्थकश्च। ग्रीक्भाषायां मील्गेइन =प्रपूरणे, लातिन्-भाषायां च मुल्गेरे ( mulgere )=प्रपूरणे। सुपुरातनोऽर्थः संस्कृतभाषायाः √मृज् ( मर्ज् ) इति धातुना शुद्ध्यर्थकेन ( घर्षण-संघट्टनाद्यर्थकेन ) प्रकाशमायाति। अयमपि धातुः संचूर्णन-संघट्टनाद्यर्थकस्य √मर् ( मृ ) धातोर्विकासात्मकः[२]।

आँग्लभाषायां √मर् इति धातुराहननार्थकः एँग्लो-सैक्सन्-भाषायां मेर्रन् ( merran ) इति, पु० उ० जर्मन्-भाषायां मर्र्जन् ( merrjan )

१. W. D. Whitney : The Century Dictionary, Volume V, Pages 3761.

२. Rev. Walter W. Skeat : An Etymolological Dictionary of the English Language, Pages 368.

इति धातुः प्रयोजकः। अयं संबध्यते एँग्लोसैक्सन्-भाषायाः कोमलार्थकेन मीरु ( mearu ) इति शब्देन, पुरातनजर्मन-भाषायामयं मरो ( maro ) इति। इत्थं √मर् धातोर्निर्वलीकरणरूपोऽर्थः। एँग्लोसैक्सन्-भाषामयस्य 'मीरु' ( mearu ) इति शब्दस्य मौलिकोऽर्थस्तु संघर्षद्वारिका पेषणद्वारिका वा कोमलता विद्यते[१]। अयं दृक्कोणः समर्थ्यते आइस्लैण्डिक्भाषामयेन संघर्षणार्थकेन मेर्ज ( merja ) इति धातुना। एँग्लोसैक्सन्-भाषाया णिजन्तो मेर्रन् ( merran ) इति धातुः, पु० जर्मनभाषायाश्च मर्र्जन् ( marrjan ) इति धातुर्मूलार्थकं तमनुधावतः। ग्रीकभाषाया मरैनेइन इति दुर्वलीकरणरूपार्थको धातुरपि तुलनीयो नूनं √मर् इति धातोर्व्युत्पन्नः; एँग्लो-सैक्सन्-भाषाया अमेर्रन् ( àmerran ) धातोरनुगुणस्तत्समीपवर्ती च। गाथिकभाषाया मर्ज्जन् ( marzjan ) इति धातुरपि ( क्लेशनार्थकः, विषमीभावहेत्वर्थकः प्रस्खलनहेत्वर्थको वा ) यदि संस्कृतभाषामयेन √मृष् इति धातुना संबद्धस्तर्हि नूनं समोद्गमः[२]।

अस्मिन् प्रसङ्गे √मृड् धातुरपि सुखार्थको विलोकनीयः। प्रारम्भिक आकारो भवेत् तस्य 'मर्ल्' इति कोमलीभावे कर्टियसमहाशयो ग्रीकभाषाया मेइल्-इक्सॉस्, मेइल्-इक्सिऑस्=कोमलार्थकशब्दप्रसङ्गे प्राह[३]। रसन्-भाषायां मिलुइ ( milui ) दयालुरूपार्थकः[४], मिलोसेर्दुई ( miloserduii ) अनुग्रहार्थकः। लिथुआनियन्-भाषायां मेलस् ( melas ) इति प्रियार्थकः, मिलेति ( myleti ) इति धातुः प्रियतायाम्। इत्थं √मृज्, √मृल् ( ड् ), √मृष् इति च धातूनां मूले √मर् ( मृ ) धातुरिति[२]। कात्यायनीयवार्त्तिकोद्धृतस्य मरीस-शब्दस्य तुलना संस्कृतधातुना √मृष् इत्यनेन प्राकृतभाषामयेन √'मरिस'[५] इत्यनेन च करणीया।

भारोपीयभाषायां मरीसादीनां दुग्धवाचकानां मूलशब्दोऽस्ति—मेल्ग् ( melg ) इति, ( अथवा मेलैग् [ melәg-? ] इति )। अयं स्खलने

---

१. द्रष्ट. मैक्समूलर-महोदयस्य Lectures on Science of Language, Vol. II, Lect. 7.

२. Skeat : An Etymological Dictionary of the English Language. द्र० mar, mild इति च।

३. G. Curtius : Greek etymology; Tr. by Wilkins.

४. √मुल १/४९८ धारणे—मुला = स्तनः—काशकृत्स्नधातुव्याख्यानम्।

५. समराइच्चकहा ६७०।

( नग्नीकरणे ), संघट्टने, परिमार्जने; यूरोपे तु प्रपूरणे ( To milk ) । संस्कृत-भाषायां मार्ष्टि, मृजति, मृष्टम् इति । अवेस्ताभाषायां मरेजैति, मैरैजैति ( marezaiti, mərəzaiti )=निस्सारणार्थं स्पर्शने; जस्ता-मरश्त =हस्तद्वारकं कृत्स्नमास्फालनम्, आघातः । सं० मृडति, मृडयति; अवे० मैरैज्दा ( mərəzdā )=मर्षणे; [ मैरैज्दिक ( mərəzdika ), मर्ज्दिक ( marzdik )=क्षमावान् ] । अस्यां शृङ्खलायां तालव्यराहित्ये दन्त्या अपि शब्दाः । यथा–सं० निर्मार्गः, निमृग्रः, विमृग्वरी, अपामार्ग इत्यादयः ।

ग्रीकभाषायाम्—अमेल्गो=दोह्मि, hom. ऐन् नुक्तोस् अमोल्गो =क्षणेन रात्रिप्रकाशदोहनम् । इप्पेमॉल्गोस्, वॉउमोल्गोस्=गोदोग्धा; अमॉल्गेउस्, अमेल्क्तेर्=दोहनी ( दोहनघटी ) ।

लातिन्—मुल्गेओ-एरे ( mulgeō,-ēre ), मुल्सि ( mulsi ), मुल्क्तुस् ( mulctus ) [=सं० मृष्ट–स् ]=दोहने । मुल्क्त्र ( mulctra )=दोहनी ।

मध्य०आयरिश्—ब्लिगिम् ( bligim )=दोह्मि [ * म्लिगिम् ( mligim ) इत्यपि ],–क्तप्रत्ययान्तः,–दो-ओम्-मल्ग् ( do-om-malg ), म्लेगुन् ( mlegun )=दोहनम्, मेल्ग् ( melg )=दुग्धम्, षष्ठ्यां च बो-मिल्गे ( bo-milge=गोदुग्धस्य ), म्लिश्त, ब्लिश्त ( mlicht, blicht )=दुग्धम् । बो-म्लश्त ( bo-mlacht ) [ * बो-म्लिश्त ( * bo-mlicht )=गोदुग्धम् ] इत्यपि । किम्रिक्—ब्लिथ् ( blith )=दुग्धम्, दुग्धी, दुग्धिनी, दुग्धिन् वा । अल्बेनियन्—मील्, मिल् ( miel, mil )=दोह्मि ( * melg– ) ।

पु० उ० जर्मन्—मिल्शु, मेल्शन् (milchu, melchan), एँग्लोसैक्सन्—मेल्कन् (melcan)=दोहने [तुल० एँग्लो-सैक्सन्—मेओल्सियन् (meolcian) पु० आइसलैण्डिक्—म्जोल्क ( mjolka ) इति संज्ञाभिधायकं मेलुक् ( *meluk )=दुग्धम् इत्यस्य ], पु० उ० जर्मन्—शुमेल्क्त्र (chumelktra) =दोहनी [ तुल० लातिन्—मुल्क्त्र ( mulktra ) ], पु० नार्दिश्—म्जल्त्र् ( mjaltr )=क्षीरी, क्षीरिणी वा [ *मेल्क्त-( melkta- )]; दुग्धगाढतायां तु एँग्लोसैक्सन्—मोल्केन् ( molcen ), म० उ० जर्मन्—मोल्शेन्, मोल्केन ( molchen, molken )=गाढं दुग्धम् । न० उ० जर्मन— मोल्केन् ( molken ) तथा पु० आइस्लैण्डिक्—schw. v. मोल्क ( molka )=दोहने,=मिल्क्ज ( mylkja )=धयने ।

अत्र भाषासु स्वरद्वयम् : गॉथिक्—मिलुक्स् (milux), पु० उ० जर्मन्—

मिलुह् (miluh), एँग्लो-सैक्सन्--मेओल्क् (meolc), मिओलुक् (mioluc) पु० आइस्लैण्डिक्--म्योल्क् (mjǫlk)=दुग्धम्। एकेकार-विस्तारस्त्विह भाषासु दर्शनीयः—एँग्लो-सैक्सन्—मिल्क् (milc) तथा न० पु० जर्मन् hess. मेल्क्स् (melx) [*milik-]।

लिथुआनि०—मेल्ज़ु, मिल्ज़्ति (melzu, milzti), क्तप्रत्ययान्तश्च—मिल्ज़्तस् (milztas) [सं० मृष्टस्-, लातिन्—मुल्क्तुस् (mulctus)]= दोहने; परोक्षे—मल्जिति; रूसी चर्चस्लावोनिक्—मल्ज़ु (melzu), म्लेस्ति (mlĕsti)=दोहने, रसन्—मोलोज़िवो (molozivo)=पशुदुग्धम् इति।

ओकारस्य क्रमेण तु सेर्वो-क्रोटिश्—म्लाज् (mlāz)=दुग्धोत्सेकः, तोखारियन्—माल्कुने (mālkune)=इदं दोहनम्; मल्के, मल्क-वेर् (malk-wer)=दुग्धम्[१]।

सुआहिलीभाषायां साम्लि (सामुलि)-शब्दो घृतार्थकः, सलीमु-धातुस्तु समर्पणार्थकः[२]। स्काटिश्-भाषायां मल्लखी (mallachie) इति शब्दो मिश्रितदुग्धजलवर्णवाचको विशेषणवचनः[३]।

मारिष (मार्ष)-नामकस्तण्डुलीयशाकविशेषः श्वेतो रक्तश्च स्मृतः। तत्र श्वेतस्य दुग्धार्थे संक्रान्तिरिति न समीचीनम्, कल्पनामात्रेण तथ्योद्घाटनाभावात्।

यद्यपि दुग्धार्थको मरीस-शब्द आर्यभाषास्रोतस्क इति सुनिश्चितं तथापि तमिलभाषायां मेषीदुग्धार्थकः 'मरि-शैक्कु' इति शब्दो विद्यते समस्तः। तत्र मरि[४]=मेषी, मेषशावकश्च। वडवार्थको हरिण्यर्थकोऽप्ययं शब्दः। शैक्कु[५]=दुग्धम्। शैक्के[५]=योषोरः। मातृदुग्धवाचकस्तमिलभाषायामन्योऽपि विद्यते शब्दः-'शाशि'[६] इति। इत्थं 'मरि-शैक्कु' इति, आहोस्विद् 'मरि-

---

१. Julus Pokorny : Indogermanisches etymologisches Wörterbuch, Pages 722-723.

२. Dr. L. Kraft : A Dictionary of the Suahili Language.

३. J. Jamieson : A Dictionary of Scottish Language.'

४. ३६०१—T. Burrow & M. B. Emeneau : A Dravidian Etymological Dictionary.

५. २३०३—तदेव।

६. २००६—तदेव।

शाशि' इति संक्षेपेण मरिश>मरीस इति शक्यते भवितुम्। मलयालम-भाषायां 'मारि'[1] इति शब्द आसारार्थकस्तमिलभाषायां च वृष्टिवाचको[3] जलादिवाचकश्च। मारशब्दश्च[2] तमिलभाषायामुरोवाचकः।



---

१. ३६४८—तदेव।

२. ३६४७—तदेव।

# जन्याः

संज्ञायां जन्याः—'जनीशब्दाद् द्वितीयासमर्थाद् वहतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति समुदायेन चेत् संज्ञा गम्यते' इति काशिकावृत्तिः। न कृता काशिकाकारेण निपातनचर्चा। कात्यायनीयवार्त्तिकपक्षस्तदभिमतः[1] प्रतीयते। न्यासकारेण तु सुस्पष्टं जनीशब्दादेव यत्प्रत्ययस्य पक्षः स्थिरीकृतो महाभाष्यकारस्य समाधानं च 'सर्वकालार्थं निपातनम् इत्येके' इति कृत्वा विचारार्थं परित्यक्तम्[2]। भट्टोजिदीक्षितैस्तु 'जन्या' इति निर्विसर्गः पाठः स्थापितः, व्याख्यायां चैकवचनमेव प्रदर्शितम्[3]। तच्च नागेशेन प्रत्याख्यातं 'पञ्चमीनिर्देशात्' इति वार्त्तिकांशव्याख्यातुर्महाभाष्यकारस्य 'जनीशब्दादेषा पञ्चमी' इति वचनबलेन[4]। निपातनचर्चा द्वाभ्यामेव न कृता।

इह खलूदेत्ययं प्रश्नः—'संज्ञायां जन्याः' इति सूत्रे कस्तावन्निपातनावकाशः? इति। 'संज्ञायाम्=नाम्नि, जन्याः=जनीशब्दात् तद्वहति रथयुगप्रासङ्गम्'—४.४.७६ तद्वहतीत्यर्थे 'प्राग्घिताद् यत्'—४.४.७५ यत् प्रत्ययो भवति' इत्येष हि सरलः सूत्रार्थः संगच्छते। महाभाष्यकारैस्तु—'जनन्या जनीभावो निपात्यते यश्च प्रत्ययः' इति, सर्वकालार्थः प्रत्ययविधिर्यथा विज्ञायेत' इति च निपातनप्रयोजनानि दर्शितानि[5]। न्यासकारेण महाभाष्यकारपक्षः

---

१. *जन्या इति निपातनानर्थक्यं पञ्चमीनिर्देशात्* जन्या इति निपातनमनर्थकम्। किं कारणम्? 'पञ्चमीनिर्देशात्'। जनीशब्दादेषा पञ्चमी।
—महाभाष्यम् ४.४.८२।

२. ननु च जनीशब्दादेव यद् विधेयः। सर्वकालार्थं निपातनमित्येके
—काशिका-विवरणपञ्जिका ४.४.८२।

३. जनी=वधूः। तां वहति=प्रापयति—जन्या—वै० सिद्धान्तकौमुदी १६३४।

४. 'जन्याः' इति सविसर्गः पाठः। अत एव 'जनीशब्दादेषा पञ्चमी' इति भाष्यं संगच्छते। एतेन 'निर्विसर्गपाठं पठित्वा स्त्रियामेवास्य साधुत्वम्' इति वदन्तः परास्ताः। 'यातेति जन्यानवदत् कुमारी' इति कालिदासप्रयोगनिरोधाच्च
—बृहच्छब्देन्दुशेखरः (द्वितीयो भागः), १३८७ पृ०।

५. किं निपात्यते? जनन्या जनीभावो यश्च प्रत्ययः।...इदं तर्हि प्रयोजनम्—सर्वकालः प्रत्ययविधिर्यथा विज्ञायेत। जनी वहन्ति जन्याः। जनीम्नवाक्षुर्जन्या इति—महाभाष्यम् ४.४.८२।

'केचित्' इति कृत्वोपस्थापितः[१]। चान्द्रव्याकरणे तु प्रयोजनद्वयं निपातनस्य दत्तम्—यद् बहुवचनं चेति[२]।

यत्प्रत्ययविशिष्टं परिनिष्ठितं 'जन्याः' इति शब्दं सूत्रे विज्ञाय निपातन-चर्चा। यत्र यत्र सूत्रेषु विना प्रकृतिप्रत्ययचर्चया परिनिष्ठितः शब्दस्तत्र तत्र निपातनत्वं नाम[३]। यद्यपि कात्यायनेन 'जन्याः' इत्यत्र पञ्चम्येकवचनत्व-मूहितम्' प्रकृतिश्च 'जनी' इति दर्शिता तथापि महाभाष्यकारस्याग्रहो निपातन-विषयक एव। प्रयोजनं च सर्वकालार्थः प्रत्ययविधिर्यथा विज्ञायेतेति। 'तद्वहति' इत्यनुवृत्तिर्वर्तमानकालसूचिकैव। महाभाष्यकारानुसारेण 'संज्ञायां जन्याः' इत्यत्र त्रैकालिकक्रियासम्बन्धः। ये भविष्यति काले जनीं वोढारस्तेऽपि जन्याः, भूतकाले ऽवाक्षुस्तेऽपि तथा। अनुवृत्त्या नायमर्थो लभ्यत इति सर्व-कालप्रत्ययविध्यर्थं निपातनम्। यद्यपि महाभाष्यकारः सर्वत्र बहुवचनान्तामेव प्रयुयुजे क्रियां तथापि निपातनाद् बहुवचनस्य न क्वापि चर्चा कृता। चान्द्र-व्याकरणे निपातनस्य प्रयोजनद्वयं दर्शितम्—यद् बहुवचनं चेति[२]। जैनेन्द्र-व्याकरणे तु जन्यधेनुष्यादीनां निपातनशब्दानाम् एकस्मिन्नेव सूत्रे निबन्ध-नम्[४]। हैमशाकटायनसारस्वतव्याकरणेषु नास्योपलब्धिः। प्रक्रियाकौमुद्यां नोल्लिखितं प्रकृतं सूत्रम्। संक्षिप्तसारव्याकरणे जनशब्दात् तद् वहतीत्यर्थे

१. केचित् कर्तरि जायतेऽस्यां गर्भ इति कृत्यल्युटो बहुलम् (३.३.११३) इति ल्युटि जननशब्दाच्च ङीपि नकाराकारयोर्लोपेन साधयन्ति। ननु च जनी-शब्दादेव यद् विधेयः। सर्वकालार्थं निपातनमित्येके।
—काशिकाविवरण-पञ्जिका ४.४.८२।

२. नाम्नि जन्याः ३.४.८१—संज्ञायां जनीशब्दाद् वध्रूवाचिनस्तद् वहतीत्य-स्मिन् विषये यन्निपात्यते बहुवचनं च। जनीं वहन्ति जन्याः=नवोढाया ज्ञातिभृत्याः—चान्द्रव्याकरणम्।

३. तुलनीयानि सूत्राणीमानि—४.२.३६; ४.४.८६; ५.२.१३; १४; २३; ७१; ७३; ७४; ८०; ९०; ९१; ५.३.१७; २२; ३१; ३२; ६.१.१४३; १४४; १४५; १४६; १४७; १४८; १४९; १५०; १५२; १५३; १५४; १५५; १५६; १५७; ६.४.१७४; ८.२.१२; १३; १४ इत्यम-न्यान्यपि।

४. जन्यधेनुष्याग्नवश्यवन्यगण्यपद्यमूल्यहृद्यसतीर्थ्यगार्हपत्याः ३.३.१९५ जन्यादयः शब्दा निपात्यन्ते—जैनेन्द्रव्याकरणम्।

विधीयते यत् प्रत्ययः[१] । जनशब्दादपि जनीशब्दादपि च प्रत्ययः स्यादित्येतदर्थं निपातनमावश्यकम् । जनं वरं वहन्ति=श्वसुरगृहं प्रापयन्तीति जन्याः वरपक्षीया जना[२] जामातुर्वयस्या इति वा । वरपक्षीया जना एव वरं श्वसुरगृहं प्रापयन्ति न त्वेकको गच्छति वर इति परम्परा । विशेषतः श्वसुरमन्दिरान्तः स्निग्धैः सह गच्छति वरः । ते सखायो मध्ये मध्ये हासमपि कुर्वन्तीति वरस्निग्धार्थेऽपि रूढो जन्यशब्दः । वैयाकरणानामिहैव तात्पर्यमिति ते 'जन्याः=जामातुर्वयस्याः' इति व्याचख्युः । अन्ये तु कालिदासीयप्रयोगानुसारेण 'जामातुर्वयस्या' मातुर्वयस्या वेत्येकवचनान्तमेव पेठुः[३] । नैषधमहाकाव्ये जन्यानाम्=वरस्निग्धानामयं हासप्रकारः षोडशसर्गे द्रष्टव्यः[४] । पालिभाषायामयं कुलीनजनार्थकः[५] जञ्ञरूपेण प्रयुज्यते । प्राकृतभाषायां तु जनहितकरार्थकौ जन्न-जण्ण-शब्दौ[६] । इह जनशब्दात् 'तस्मै हितम्' इत्यर्थे

---

१. ८०७ जन्याम्नान्नि । जन्यो जामातुः स्निग्धः सखा च—संक्षिप्तसारव्याकरणम् ।

२. क आसं जन्याः के वराः क उ ज्येष्ठवरोऽभवत्—अथर्ववेदः—११.१०.१—जन्याः=जनसंबन्धिनो बान्धवा वधूवरपक्षीयाः [ सायण-] ।
जन्यार्थमन्नं द्रुपदेन राज्ञा विवाहहेतोरुपसंस्कृतं च ।
—महाभारतम् १. १९४. १=वरपक्षीयजनार्थम् [ नीलकण्ठ—] ।

३. जनीं वहति जन्या=जामातुर्वयस्या । सा हि विवाहादिषु (विहारादिष्विति पाठान्तरम्) जामातृसमीपं प्रापयति—काशिका ४.४.८२ ।
जनी । तां वहन्ति जन्याः=जामातुर्वयस्याः ।
—काशिकाविवरणपञ्जिका ४.४.८२ ।
जनीं वहति जन्या=जामातुर्वयस्या । सा हि प्रणयकलहादौ वधूं जामातुःसमीपं प्रापयति—शब्दकौस्तुभः ४.४.८२ ।
प्रणयकलहादौ प्रियसमीपं प्रापयतीत्यर्थः । जन्या=मातुर्वयस्या ( 'जामातुर्वयस्या' इति पाठान्तरम् )—वृहच्छब्देन्दुशेखरः । अत्र न्यासकार एव वहुवचनान्तं पपाठ ।

४. न्यधत्त जन्यस्य ततः पराऽऽकृषत्—नैषध० १६,५१=कस्यचिद् वरसखस्य [ मल्लि० ] ।
कटाक्षणाज्जन्यजनैर्निजप्रजाः—नैषध० १६,४८=वरपक्षीयस्निग्धजनैः[मल्लि० ।

५. जञ्ञ (विशेषण-)—मिलिन्द० १.३०—P.T.S. Paliengich Dictionary.

६. जन्न—सूअगडांगसुत्त २, ६, २; प्रश्नव्याकरणसूत्र १, २, ४; पउमचरिअ ११, ४६ । जण्ण—धर्मसंग्रहणी १०० [ पाइअ-सद्द-महण्णवो ] ।

यत् प्रत्ययः ( तुल०—सू. ४.३८.६ ) । प्रादेशिकीषु भाषास्वयं सर्वत्र वरयात्रार्थकः ( वरपक्षीयजनसमूहार्थकः ) लभ्यते[१] । स्याद् विकासमाप्तः प्राकृत-भाषाया जन्ना < जन्नता < जण्णयत्ता ( < सं. जन्ययात्रा ) इति शब्दात्[२] । जन्यानाम् = वरपक्षीयाणां यात्रेत्ययं शब्दः प्रथमतो मालतीमाधवे भवभूतिकृति दृष्टिपथमायाति[३] । तदनु च नैषधे महाकाव्ये[४] ।

जनयात्रां गच्छतीति जान्ययात्रिकः शब्दः *गच्छतौ परदारादिभ्यः* इति वार्त्तिकगणपाठान्तर्गत इति वर्द्धमानो गणरत्नमहोदधौ[५] । यद्यपीतरे वैयाकरणाः

---

१. जन्न ( स्त्री. ) the party which goes with the bridegroom at weddings, a marriage procession.

—Captain Stack : A Dictionary Sindhi & English.

लहँदा—जञ्ज् ( स्त्री. ); गुज. जान् ( स्त्री. ); खरोष्ठीशिलालेख.—जन्नत्र; पु० गुज० जानत्र ।

—R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages.

नेपाली—जन्त = वरयात्रा ।

—R. L. Turner : A Comparative & Etymological Dictionary of the Nepali Language.

पंजाबी—जंज, जञ्ज, जांज, जनेत ( स्त्री ) = वरयात्रा A wedding procession, A wedding party. 'डेंह् दी धुप्प ते रात दीं भुक्ख जंज दा गहना' [ = दिवा चातपः, नक्तं च बुभुक्षेति जन्ययात्राभूषणम् ] ।

—Panjabi English Dictionary.

हिन्दी—जनेत = वरयात्रा—हिन्दी शब्दसागर । पुरा० अवधी—अवध समीप पुनीत दिन पहुँची आय जनेत—तुलसिदासः ।

२. जन्ना, जन्नत्ता ( दे० )—सुपासनाहचरिअ ३६६; उपदेशपद-टीका ७६८ । जण्णयत्ता—उपदेशपद ६५४ [ पाइअसद्दमहण्णवो ] ।

३. प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥ मालतीमा० २४०, ११—जन्याः = वरस्य स्निग्धास्तेषां यात्रायाः प्रवेशः [ जगद्धरः ] ।

४. स जन्ययात्रामुदितः किरीटवान्—नैषध० १५,७२—जन्यानाम् = वरस्निग्धानां स्वकीयस्नेहभाजनानामित्यर्थः । यात्रया = विवाहयात्रया [ मल्लि० ] ।

५. परदारा गुरोस्तल्पं माथोत्तरपदं तथा ।
पदव्यनुपदाक्रन्दजन्ययात्राः प्रकीर्तिताः ॥ ३७३ । जान्ययात्रिकः ।

२

काशिकाकृदादयो नेमं शब्दं तद्वार्त्तिकगणपाठान्तर्गतं पठन्ति तथापि प्रादेशिकीषु भाषासु जान्ययात्रिकशब्दस्यापभ्रष्टानां रूपाणामुपलम्भात् तत्प्रामाणिकत्वम्[1]। गणरत्नमहोदधौ 'जन्ययात्रा' इत्यस्य यन्ययात्रेति 'जान्ययात्रिकः' इत्यस्य च 'यान्ययात्रिकः' इति पाठभेदो दृश्यते। नैषधमहाकाव्येऽपि 'जन्याः' ११,१५ इत्यस्य 'यान्याः' इति पाठान्तरम्। यद्यपि 'जन्ययात्रा' इति शब्दस्य स्वरूपं 'यज्ञयात्रा' इति शक्यते कल्पयितुम्; यज्ञार्थमेव विवाहस्य विधानात्। मध्यप्रदेशीयग्रामेष्वद्यापि विवाहस्य कृते 'धनस जग्य' इति शब्दस्य प्रयोगः। मन्ये, शब्दोऽयं जनकपुर्यां धनुर्भङ्गेन सीतारामविवाहात् प्रचलितः। तत्र यज्ञशब्दार्थो विवाहः (धनुषि भग्ने यज्ञः = विवाहः। यथा संप्रति प्रेम्णि सति विवाहः—प्रेमविवाहः)। विना पत्नीं न संपद्यन्ते महायज्ञाः। विवाहात् प्रभृति महायज्ञानां परम्परा। शावरभाष्यस्य विवरणात्मके आचार्यकुमारिलभट्टविरचिते तन्त्रवार्त्तिके देवतायतनयात्रायां सदाचारो दर्शितः[2]। एवं सत्यपि दृढतरप्रमाणाभावाज्जन्ययात्राशब्दस्य यज्ञयात्राशब्दोद्भवत्वे नास्माकमाग्रहः। जन्यानां वासार्थको जन्यवासशब्दोऽपि विज्ञायते, प्रादेशिकीषु भाषासु तद्भवानां शब्दानां प्रयोगात्[3]। निष्कर्षतो वरप्रापकाणामर्थे प्रयुक्तो जन्यशब्दः सुदृढमूलः।

द्वितीयतस्तावद् जन्यशब्दः कन्यापक्षीयजनार्थकोऽपि। तत्र हि जनीम् =

---

१. पंजाबी—जनेती, जनेतिआ, जांजी one of a wedding party.
—Bhai Maya Singh : Panjabi English Dictionary.
नेपाली—जन्ति a member of wedding procession.
—R. L. Turner : C. E. Dictionary of the Nepali Language.

२. शक्रध्वजयात्रा, देवतायतनेषु यात्रा च सदाचारः—त० वा० १,३,३,७ [२०५ पृ०]।

३. सकल सुपास जहाँ दीन्हो जनवास (कबीरः)।
दीन्ह जाय जनवास सुपास किये सब—तुलसिदासः।
मराठी—जनिवसा, जानवसा, जानोसा [= वारयात्रिकाणां निवासाय गृहादिकं कन्यापक्षीयैर्दत्तम्]—मराठीव्युत्पत्तिकोश।
बिहारी—जन्वाँसा, मैथि० जन्मासा।
—R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages.

कन्यां[1] वहन्ति = प्रापयन्ति वरसमीपमिति जन्याः = कन्यापक्षीया[2] जनाः। मातृवयस्या[3] स्वयंवरमण्डपं विवाहमण्डपं वा; जामातृवयस्या च वरसमीपं[4] प्रापयति जनीमिति सापि जन्येति शब्देन संबोध्यते। इयं परम्पराऽद्यापि भारते वर्षे प्रायः सर्वेषु प्रदेशेषु विद्यते। मल्लिनाथो रघुवंशटीकायां 'यातेति जन्यानवदत् कुमारी' इति पाठभेदं प्रादर्शयत्। तत्परवर्ती भट्टोजिदीक्षितस्तु पाठभेदं मूलतयोपास्थापयत्[5]; तन्न समीचीनम्, सुनन्दायाः षट्कृत्वः प्रयोगदर्शनात्; 'नीत्वा कुमारीम्'[6] इति कुमार्याः = जन्याः सुनन्दाद्वारकवहनार्थकत्वस्यापि प्रयोगाच्च यानवाहानामप्रसङ्गः। वैदुष्यं प्रकटयता महाकविना श्रीहर्षेण नूनं स्वयंवरस्थले वहुवचनो जन्यशब्दो यानवाहार्थकः प्रयुक्तः पाणिनेः 'संज्ञायां जन्याः' इति सूत्रे वहुवचनं गतार्थयता[7]। तेन स्वयमेव श्लोकान्तरेषु तत्पर्याय-

१. लौंड़ोवानो (पशइ-भाषाया उपभाषा)—जान् [जोड़ा] girl, grown up daughtor—R. L. Turner तदेव।

२. उभयांस्तेजनीष्वासजेज्जन्यान् कौमारिकांश्च। पूर्वे जन्याः स्युरपरे कौमारिकाः —वाराहगृह्यसूत्रम् १०, १३।
धनं न ब्रूयुः पुंत्रपशवो नेति जन्याः—वाग्ृ, १०, १५।
क आसं जन्याः के वराः क उ ज्येष्ठवरोऽभवत्—अथर्ववेदः ११.१०.१—जन्याः = जनसंवन्धिनो वान्धवा वधूवरपक्षीयाः [सायणः]।
अथ जन्यानामेको ध्रुवाणामपां कलसं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते।
—गोभिलगृह्यसूत्रम् २.१.१२—जन्यानाम् = कन्याज्ञातिजनानां मध्ये [टिप्पणी]।

३. याहीति जन्यामवदत् कुमारी—रघु० ६,३०—जन्याम्=मातृसखीं सुनन्दाम् [मल्लि०]।

४. द्रष्ट० काशिका ४.४.८२; शब्दकौस्तुभः ४.४.८१।

५. कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्त—यातेति जन्यानवदत् कुमारीति। —शब्दकौस्तुभः ४.४.८१।

६. प्राक् संनिकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत् सुनन्दा—रघु. ६,२०।

७. जन्यास्ततः फणभृतामधिपं सुरौघान्—नैषध० ११,१५—जनीं वहन्तीति जन्याः = वधूभृत्याः [मल्लि०]।
जन्या जना हृदयवेदितयैव निन्युः—नैषध० ११,३४।
राजन्यमन्यमथ जन्यजनः स निन्ये—नैषध. ११, ६५ = वाहकलोकः [मल्लि०]।

वाचित्वेन 'यानधुर्य-' यानिवर्ग-' 'विमानवाह-' 'शिविकांशभृत्' 'शिविकाभृत्' इत्यादिशब्दानां विहितः प्रयोगः[१] । स्वयंवरस्थले शिविकाप्रयोग आश्चर्यकरः । विवाहोत्सवे श्वसुरगृहं प्रति गमनवेलायां वधूरवश्यं शिविकामधिरोहति संप्रत्यपीति यानवाहेषु बहुवचनान्तजन्यशब्दप्रयोगो दुर्निवारः । प्रक्रियासर्वस्वकारो नारायणभट्टोऽपि जनीशिविकाधारिणि जन्यशब्दप्रयोगमाह[२] । तत्रैकवचनान्तजन्यशब्दो जन्यसमूहपरः ।

वरस्त्वाजीवनं जनीं वहतीति तदर्थेऽपि प्रयुज्यते जन्यशब्दः[३] । 'संज्ञायां जन्याः' इति सूत्रेण यत् प्रत्ययः स्वार्थेऽपि निपात्यते; जन्येति शब्दस्य कन्यावाचकत्वात्[४] । काशकृत्स्नधातुव्याख्याने जननार्थके जन २।७८ धातौ जन्यः, जान्यः, जानश्चेत्येते त्रयः शब्दा उत्पादयितरि प्रोक्ताः कृदन्ताः । अपत्योत्पादकत्वस्य भावित्वाद् जनः = जनकः, जनी = जननी[५] च । इदमेव दर्शयितुं महाभाष्यकारेण निपातनप्रयोजनं जनन्या जनीभावत्वेन प्रदत्तम्[६] । एतदेव मतान्तररूपेण न्यासकारो दर्शयामास[७] । महाभाष्यटीकायामुद्योतकारो नागेशः प्राह—'भाष्ये जनन्या जनीभाव इति । योग्यतावशात् पुत्रजनन्यत्र जनना-

---

१. ११, १२; १३; २२; ४७; ५६; ७१ ।

२. जनीशब्दात् वहत्यर्थे नाम्नि यत् स्याजनी वधूः ।
जन्यस्तच्छिविकाधारी तां पतिं प्रापयन्नपि ॥
तेन जन्यो वरसुहृज्जन्या चैनं वधूसखी ।
—प्रक्रियासर्वस्वम् ४.४.८२ ।

३. य एवं विद्वानपि जन्येषु भवति—तैत्तिरीयसंहिता ६.१.६.६—कन्याया वरितारो जन्याः [भट्टभास्करः] ।

४. जन्यां ददामीति—वाराहगृह्यसूत्रम् १० = जन्येति कन्यानाम [टिप्पणी] ।
शालानेकखलाजिनातपफला जन्याजिनं पिप्पलीं ।
—गणरत्नमहो० ३०२ श्लो० ।

जन्या = वधूस्तद्वाहिका ( तद्वाहका—पाभे. ) वा । तु० ज्येना ( रूसी ) = जनी, पत्नी ।

५. ऋ. ६.१८.८ ।

६. जनन्या जनीभावो निपात्यते—महाभाष्यम् ४.४.८२ ।

७. केचित् कर्तरि जायतेऽस्यां गर्भं इति कृत्यल्युटो बहुलम् ( ३.३.११३ ) इति ल्युटि जननशब्दाच्च ङीपि नकाराकारयोर्लोपेन साधयन्ति ।
—काशिकाविवरणपञ्जिका ४.४.८२ ।

शब्देन गृह्यते' इति। विवाहस्य संततिफलकत्वेन तदौचित्यम्। कन्या मण्डपं प्रविशन्त्येव जन्यात्वेन बोध्या। तस्याः संबन्धिनस्तु विवाहात् पूर्वम्, विवाहकाले, विवाहानन्तरं वा जन्या ज्ञेया इत्यत्रैव महाभाष्यकारस्य तात्पर्यम्।

वस्तुतः सूत्रमिदं वंशश्रेणी-(Generation)प्रतिपादनपरम् इति रूढार्थत्वाद् अधिकार्थत्वाच्च निपातनमावश्यकम्। वंशश्रेण्यन्तर्गतत्वाद् भ्रातृव्योऽपि जनशब्देन गृह्यते। भ्रातृव्यस्य राज्याधिकारे प्राथम्यं पितृव्यस्य तु न तथेति भ्रातृव्यशब्दः संवृत्तः शत्रुवाचक इति जनशब्दस्यापि तत्र शत्रुवाचकत्वम्। एवं हि शत्रुवाचकजनसंबद्धो जन्यशब्दोऽपि तथा ज्ञेयः[1]। मतजनहलात् करणजल्पकर्षेषु ४.४.९७ इति पाणिन्युक्त-कलह-युद्धादिवाचकजन्यशब्दस्याप्यत्रैव गतार्थता। संबन्धार्थको यत् प्रत्यय ऋग्वेदे दृश्यते[2]। शत्रुवाचकजनशब्देन शत्रुजनपदग्रहोऽपि; तस्माच्च भावार्थको यत् प्रत्ययः[3]। क्वचिच्च जनपदवाचकजनशब्दात् स्वार्थिकोऽपि यत् प्रत्ययः[4]। क्वचिच्च जनशब्दात् 'तस्मै हितम्' इत्यर्थेऽपि यत् प्रत्ययो दृश्यते[5]। क्वचिच्च पृथग्जनवाचकजनशब्दात् स्वार्थे यत् प्रत्ययोऽवगन्तव्यः[6]।

---

१. सपत्नो वै द्विषन्तो भ्रातृव्या जन्यानि—ऐब्रा. ८.२६ = जन्यानीत्यनेन सपत्ना एवाभिधीयन्ते। सपत्नशब्दस्य व्याख्यानं द्विषन्तो भ्रातृव्या इति [सायणः]। जन्या गावो नमेयुर्विन्देत मे जन्या गा राष्ट्रमिति यदेषा प्रतिपद्भवत्युपैनं जन्या गावो नमन्ति विन्दतेऽस्य जन्या गा राष्ट्रम्—ताण्ड्यब्राह्मणम् ६.१०.१९—अत्र जनशब्दः शत्रुजनसंवादी। जन्यास्तत्संबन्धिनो गावो मे नमेयुः = प्राप्नुयुरिति [सायणः]।

२. पात्पतिर्जन्यादंहसः—ऋ. ४.५५.५ = जनसंबन्धात् [सायणः]।

३. न्यस्मै द्युम्ना जन्या नमन्ताम्—ऋ. १०.४२.६—जन्याः = जन्यानि= शत्रुजनपदभवानि [सायणः]।

४. दूतेव हव्या जन्या पुरुत्रा—ऋ. २.३९.१ = जनपदेषु [सायणः]।

५. स्रजं कृण्वानो जन्यो न शुम्वा—ऋ.४.३७.६ = जनेभ्यो हितः [सायणः]। ब्रह्म जेन्यं जोषि सुष्टुतिम्—ऋ.२.३७.६ – जनेभ्यो हितम् [सायणः]। दूतो जन्येव मित्र्यः—ऋ. २.६.७—जन्यः = जनेभ्यो हितः [सायणः]। जनं जनं जन्यो नाति मन्यते—ऋ. १०.९१.२ = जनहितः [सायणः]।

६. पुरस्तादासीनाय ब्रह्मणे प्रयच्छत्येतयैव गृहीत्वा दक्षिणत आसीनायोदुम्बरेण राजन्याय प्रयच्छत्येतयैव गृहीत्वा पश्चादासीनायाश्वत्थेन वैश्याय प्रयच्छ-

अस्मिन् सूत्रे संज्ञाशब्देन रूढिर्विवक्षिता[1]। 'संज्ञायां धेनुष्या' ४.४.८९ इति निपातनसूत्रगतसंज्ञापि रूढिः[2]। निपातनशब्दा रूढा एवेति निपातनसूत्रेषु 'संज्ञायाम्' इति न स्यादिति केषांचन मतं न समीचीनम्, निपातनशब्देषु रूढताया असार्वत्रिकत्वात्[3]। निपातनानि नाम यथा कथञ्चिद् व्युत्पाद्यानीति नावयवार्थे प्रत्यभिनिवेशः कर्तव्यः[4]।

जन्यशब्दस्यार्थानां प्रकृतीनां च बाहुल्याद् अननुसंधेयाच्च निपातनम् इति न केनापि वैयाकरणेन वास्तविकी गवेषणा कृता। भट्टोजिदीक्षितनागेशादीनां रघुवंशान्ता विचारणा। कलहार्थकस्य न विहितः समावेशः 'संज्ञायां जन्याः' इत्यत्र पाणिनिना, तदर्थस्य प्रथितत्वादिति जल्पार्थे पृथक् प्रत्ययविधानम्। सूत्रे बहुवचनं तु नैकशब्दसूचकम्। यद्यप्युत्करादिगणे (४.२.९०) स्त्रीत्वबोधको 'जन्या' इति शब्द इति ४.४.८२ सूत्रेऽपि स्त्रीत्वबोधकजन्येतिशब्दस्य बहुवचनान्तत्वं स्यात् तथापि लक्ष्यग्रन्थेषु स्त्रीत्वबोधकस्य 'जन्याः' इति शब्दस्य प्रयोगादर्शनात् पुंस्त्वबोधकजन्यशब्दानां वेदाद्युपात्तानामविनिवेशाच्च न तथात्वम्।

—:०:—

---

त्येतयैव गृहीत्वोत्तरत आसीनाय नैयग्रोधेन जन्याय प्रयच्छति।

—बौधायनश्रौतसूत्रम् १२, ९ : ८।

औदुम्बरेण राजन्यः। ऊर्जमेवास्मिन्नन्नाद्यं दधाति। आश्वत्थेन वैश्यः। विशमेवास्मिन् पुष्टिं दधाति। नैयग्रोधेन जन्यः।

—तैत्तिरीयब्राह्मणम् १, ७, ८, ७ = इहोभयत्र जन्यशब्दः सुस्पष्टं शूद्रार्थकः [वागीशः]।

१. जनीम् = वधूं वहन्ति जन्याः = जामातुर्वयस्या रूढाः।

—प्रयोगरत्नमालाव्याकरणम् ११९९।

२. संज्ञा हि रूढिर्विवक्षिता—बालमनोरमा।

३. शालीनकौपीने अधृष्टाकार्ययोः ५.२.४० नात्र रूढिः।

४. वस्तुतस्तु रूढिशब्दा एते कथंचिद् व्युत्पाद्यन्त इत्यवयवार्थे नाग्रहः कार्यः [तत्त्वबोधिनी]। एषामवयवार्थो न विचारणीयः [बालमनोरमा]—पारस्करप्रभृतीनि च संज्ञायाम् ६.१.१५७।

## -जानिः

जायाया निङ्—अनेन सूत्रेण महामुनिः पाणिनिर्विधत्ते समासान्तं निङादेशम्। जायान्तस्य बहुव्रीहेर्निङादेश इति। ङित्वादादेशोऽयम्[1]। चान्द्रव्याकरणे सरस्वतीकण्ठाभरणे चैतदभिन्नं सूत्रम्[2]। 'वधूजानिः' इत्येकः प्रयोगोऽतिरिक्तश्चान्द्रे। शाकटायने तु व्याकरणे जायाशब्दस्य स्थाने 'जानिः' इत्यादेशः। प्रियजानिश्चोदाहरणं तत्र[3]। वस्तुतो जायावाचको जानिशब्दः। पाणिनिना संक्षेपप्रियेण जायाशब्दे जानिशब्दे चोभयत्र 'जा' इत्यस्य तुल्यतामभिलक्ष्य निङादेशो विहितः। तदीयेन च व्याकरणेन नायं शब्दः सिद्ध्यति जनिशब्दं विहाय। 'जनिघसिभ्यामिण्' (४।१३०) इत्यौणादिकेन सूत्रेण जातेऽपीणि 'जनिवध्योश्च' (७.३.३५) इति सूत्रं वृद्धिविघातकम्। अतो जायाशब्दस्य स्थाने 'जानिः' इति संपूर्णादेशः स्यादपाणिनीय एव।

जानिशब्दस्य मूले √जन् '(जनी) प्रादुर्भावे' इति धातुः। जनिजानादयः शब्दा अपि पाणिनिना नैव साधिताः। उत्पत्तिवाचको जायावाचकश्च जनिर्जनी वा शब्दः खल्वौणादिकः। जान-शब्दश्च भावे घञि सति 'जनिवध्योश्च' (७.३.३५) इति वृद्धिप्रतिषेधान्न साधुः। लोकमनुष्यादिवाचको जनशब्दोऽपि पचादिषु न पठितस्तेषामाकृतिगणत्वेऽपि प्रत्यक्षम्। जननीजन्मेत्यादयोऽप्यौणादिकाः। जन्य-शब्दो यदन्तो निपातितः संज्ञायाम्[4]। युद्धवाचकः खलु जन्यशब्द औणादिकः (४।११)। जनवादार्थको जन्यशब्दः 'मतजनहलात् करणजल्पकर्षेषु' (४.४.९७) इति जनशब्दाद् (औणादिकाद्) यति साधुः। 'ऋहलोर्ण्यत्' (३.१.१२४) इत्यनेन ण्यति स्यात् साधुर्जन्यशब्दः, वृद्धिप्रतिषेधात्, किन्तु नैष संज्ञावाचको भवतीति। 'भव्यगेय-' (३.४.६८) इति निपातनसिद्धजन्यशब्दोऽपि तथा। एवं तावद् √जन्-धातुसंबद्धाः शब्दाः ख्यापयन्ति किमपि रहस्यजातम्।

---

१. प्रक्रियाकौमुद्याः श्रीविट्ठलाचार्यकृतप्रसादाख्यटीकायाम्।

२. चान्द्रव्याकरणम् ४.४.१२२; सरस्वतीकण्ठाभरणम् ५.४.१६२।

३. ४३२ जायाया जानिः—शाकटायनप्रक्रियासंग्रहः २.१.२१६; श्रीसिद्धहेमशब्दानुशासनम् ७.३.१६४।

४. संज्ञायां जन्याः ४.४.८२।

वेदादिषु जनो नाम जनयिता[1], जन्मवान्[2], संघः[3], (लोकः[4]), जातिः[5] इति। अत एव जातमात्रे प्रादुर्भूतमनुष्यमात्रे वाऽस्य प्रयोगेण पामरोऽपि तदर्थः[6]। इत्थमेवं जनिर्जनी वा = उत्पत्तिः[7] जननी[8], जनयित्री

१. स यो न मुहे न मिथू जनः—ऋ० ६.१८.८ = जनयिता [ सायणः ]।
२. जनो यः कश्चित्—ऋ० १.१८२.३ = जन्मवान् [ सायणः ]।
३. जनो यः पज्रेभ्यः—ऋ० १.१२२.८ = देवजनो यश्च देवसंघः [ सायणः ]।
मनो ददातु पितरो जनः—ऋ० १०.५७.५=तेषां संघ इत्यर्थः [ सायणः ]।
जनो दिव्यो गयेन—ऋ० १०.६३.१७=देवगणः [ सायणः ]।
४. अथ प्रवाते तुमुले निशि सुप्ते जने तथा।
तदुपादीपयद् भीमः शेते यत्र पुरोचनः॥
—महाभारतम् १.१४६.६।
जनो लोके जगद्भेदे पृथग्जने—अनेकार्थतिल० २,१२०।
५. जनः race (Gk. genos, Lat. genus)—T. Burrow : The Sanskrit Language, Pages 38.
६. जनो रातहव्यः—ऋ० १.५४.७=जातः [ सायणः ]।
न देवो नाध्रिगुर्जनः—ऋ० ८.९३.११=प्रादुर्भूतो मनुष्योऽपि [ सायणः ]।
जनो लोके महर्लोकात् परलोके च पामरे—मेदिनी, ८३ पृ०।
७. स्थिरा चिज्जनीर्वहते सुभागाः—ऋ० १.१६७.७=जननशीलाः प्रजाः, वृष्ट्युत्पत्तीर्वा [ सायणः ]।
देवस्य भर्गः सहसो यतो जनिः—ऋ० १.१४१.१=उत्पन्नः [ सायणः ]।
पक्षे पक्षे जनिस्तव—हरिवंशपु० २०८,४०।
जनिकर्तुः प्रकृतिः—अष्टाध्या० १.४.३०।
८. जनन्या जनीभावो निपात्यते (जननी > जनी)—महाभाष्यम् ४.४.८२= जायतेऽस्यां गर्भ इति जनी वधूरुच्यते। 'जनिसहिभ्याम्' इतीण् प्रत्ययः। 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः [ कैयटः ]। योग्यतावशात् पुत्रजनन्यत्र जननीशब्देन गृह्यते [ नागेशः ]-गु० प्र० सं० २६४ पृ०।
पाथो न पायुं जनसी उभे अनु—ऋ० २.२.४=सर्वस्य जनयित्र्यौ [सायणः]।
तमीं गिरो जनयो न पत्न्यः—ऋ० १.१८६.७=फलस्योत्पादयित्र्यः [सायणः]।
अभि प्रदद्रुर्जनयो न गर्भम्—ऋ० ४.१९.५=जनन्यः। गर्भं पुत्रमिव [सायणः]।
पुत्रकृथे न जनयः—ऋ० ५.६१.३=अपत्योत्पादयित्र्यो योषितः [सायणः]।
आ रोहन्तु जनयो योनिमग्रे—ऋ० १०.१८.७=जनयन्त्यपत्यमिति जनयो भार्याः [ सायणः ]।

वधूर्भार्येत्यादि । जानं[1] नाम जननम् इति जानिर्नाम जननी = भार्येति । इह वृद्धिप्रतिषेधाभावस्तु जानवद् विज्ञेयः । संक्षिप्तसारव्याकरणे[2] तु जायाया उत्तरे इत्, जायायाः स्थाने च 'जान' इत्यादेशो विधीयमान उत्पत्त्यर्थकं वैदिकं जानशब्दं स्मारयति ।

स्थानी जायाशब्दोऽप्यौणादिकः पाणिन्यसाधितः[3] । स च पूर्वं नवोढार्थको[4] जननसामर्थ्यवत्यां गृहिण्यां जन्यां[5] तदनु च जनन्यां[6] प्रयुक्तः, जननसामर्थ्ये

---

प्रति त्या सूनरी जनी व्युच्छन्ती—ऋ० ४.५२.१ = जनयित्री फलानाम् [सायणः] ।

जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि—मेदिनी, नान्तवर्गे ६ ।

१. त्रीणि जाना परि भूषन्त्यस्य—ऋ० १.९५.३ = जननानि जन्मानि [सायणः] ।
को वेद जानमेषाम् —ऋ० ५.५३.१ = उत्पत्तिम् [ सायणः ] ।
अनड्वेव वाऽस्यातः पुरा जानं भवति—शब्रा० ३.२.१.४० = जन्म [सायणः] ।

२. ४६५ जायाया इज्जानश्च—संक्षिप्तसारव्याकरणम् ।

३. जायतेऽस्याम् । 'जनेर्यक्' ( उ० ४।१११ ) । अत एव काशिकायाः संक्षिप्त-सारव्याकरणस्य ( ४६५ ) च 'वृद्धजानिः' इत्युदाहरणं चिन्त्यम् ।

४. अर्थमिद्वा उ अर्थिन आ जाया युवते पतिम् । तुञ्जाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी ॥ ऋ० १.१०५.२ ।

५. जायेदस्तं सेदु योनिस्तदित्त्वा युक्ता हरयो वहन्तु—ऋ० १.५३.४—जायेत् = जायैव । अस्तम = गृहं भवति । 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति स्मृतेः सेत् = सा जायैव । योनिः = पुरुषस्य मिश्रणस्थानम् [ सायणः ] ।
अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते—ऋ. ३.५३.६ ।
द्वन्द्वसमासे पाणिनिनापि जायाशब्दस्थाने दम्भावं निपात्य जायाशब्दस्य गृहवाचकत्वमङ्गीकृतम् ( २.२.३१ ) । दमशब्दो वेदेषु ( ऋ. १.१.८; १.६०.४; १.७५.५; दम्पतिम्–ऋ० १.१२७.८ ) गृहवाचको भारोपीय-भाषास्वपि तथा—द्र० Walde vergl. Wörterbuch, I Band, Pages 788.

पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते ।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥
—मनु० ९,८ ।

६. कुमाउँनी—जइ (jai) [ used in abuse ] 'mother'; हिन्दी—जा 'mother'; गुजराती—जाई ।

सति भविष्यति तस्या जननीपदभाक्त्वात्[१]। अत एव जनशब्दः कुमार्यर्थको[२] ( नवोढा ) जायार्थको[३] जनन्यर्थकश्च[४]। इत्थमेव जन्येति शब्दोऽपि कन्या[५]-वधू[६]-जननी[७]-वाचकः। एवमेव जानिशब्दोऽपि ( कन्या )

—R. L. Turner : Comparative Dictionary of the Indo-Aryan Languages.

१. अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्—रघु. २,१ = जायापदसामर्थ्यात् सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसंधेयम्। तथा हि श्रुतिः—'पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते॥ तज्जाया जाया भवति यदस्यां जायते पुनः' [ मल्लि० ]।

२. Laurowani Dialect of Pashai—जान् [ जोड़ा ] 'girl' grown up daughtor.

—R. L. Turner : Comparative Dictionary of the Indo-Aryan Languages.

३. पतिर्जनीनाम्—ऋ० १.६६.४=जायानां कृतविवाहानाम् [ सायणः ]।
जनिर्वरस्त्रीपत्योश्च—वैजयन्ती २२१, २७।
स्नुषा जनी पुत्रवधूर्वधूः स्यात्—अभिधानरत्नमाला २, ३४६।
जनी स्नुषावनितयोः—अनेकार्थसंग्रहः २, २६२।
जन् ( रव ) 'newly married wife—R. L. Turner : Comparative Dictionary of the Indo-Aryan Languages.

४. प्रतिष्या सूनरी जनी व्युच्छन्ती—ऋ० ४, ५२, १=जनयित्री फलानाम् [ सायणः ]।
[ जनिका—जातक १.१६=माता ]।
अभि प्र दद्रुर्जनयो न गर्भम्—ऋ० ४.१६.५=जनन्यः [ सायणः ]।

५. जन्यां ददामीति—वाराहगृह्यसूत्रे १०=जन्येति कन्यानाम [ टिप्पणी ]।

६. नवोढाज्ञातिभृत्ययोः—मेदिनी, यान्तवर्ग २६।

७. ज्ञातेयं देहकर्ता तु तातो जनयिता पिता।
जन्यो वप्रश्च सविता वप्ता जन्मार्थकारकः॥
—कल्पद्रुकोशः ३१,१००।
जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्।
त्रिषूत्पाद्यजनित्रोश्च ॥
—मेदिनी, यान्तवर्ग २६।
जन्यः, जान्यः, जानः—उत्पादयितरि ( द्र० जन जनने २।७८ )
—काशकृत्स्नधातुव्याख्यानम्।

स्वसृ[1]-जाया[2]-जननी[3]-वाचकः। जन-जान-जनि-जानि-जननि-जन्य-शब्दा उत्पत्त्यर्थका अपि[4]। ऋग्वेदे प्रयुक्त आजानिशब्दो नास्ति बहुव्रीहिगर्भः। तत्र खल्वाजानिशब्द उत्पत्त्यर्थको द्रष्टव्यः। 'देवत्वमाजानमग्रे' इति यजुर्वेदीये (३१.१७) मन्त्रेऽपि तथा। यद्यपि पैप्पलादसंहितायां शब्दद्वयी समधिगम्यते पूर्वपदरूपेण प्रयुज्यमाना तथापि तत्र स्थलयोः प्रश्नवाचकचिह्ने संशीतिमुपस्थापयतः[5]। पालिभाषायां 'जानिपतयो' इति द्वन्द्व-समासे जानिशब्दः पूर्वपदप्रयुक्तः[6]। तत्र संस्कृतभाषावद् बहुव्रीहिसमासगर्भो जानिशब्दो

---

१. तिस्र आजानीरुषसस्ते अग्ने—ऋ० ३.१७.३ = जनयित्र्यो मातरः। अथवा— अनुजाताः स्वसारः [सायणः]।

२. अवे० जइनि—Karl Brugmann : Comparative Grammar of the Indogermanic Languages, II Volume, Pages 279.
व्रजभाषा—जनियाँ = प्रियतमा, प्रेयसी—व्रजभाषासूरकोष।
व्रजभाषा—जानि = पत्नी, भार्या— ,, ,, ,, ।

३. द्र० व्यवहितपूर्वा टिप्पणी।
जानी तु मातरि—अभिधानचिन्तामणिकोशे शेषनाममालायां ११७ श्लोकः।
कूर्माचलप्रदेशे 'गङ्गोई' इत्युपभाषायाम्—जाण् (=सुनिपुणा धात्री) expert midwife—R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages.

४. जननं च प्रजननं जननिश्च जनिः स्त्रियौ।
उद्भवः संभवो भावो भवो जन्युश्च पुंस्यमी॥
जनी जन्नू जनुश्चास्त्री जीवो जन्यश्च पुंस्ययम्।
—कल्पद्रुकोश: ४१६,६८।

परा वीरास एतन मर्यासो भद्रजानयः—ऋ० ५.६१.४ = भद्रः स्तुत्यो जानिर्जन्म येषां ते तथोक्ताः [सायणः]।
विजानि:—अथर्ववेदः ५.१७.१८; पैसं० ९.१६.१ (तु० W. प्रभृ०; वैतु० [पक्षे] Pw. Bw. Mw. = जन्मन्)।
सजन्य:—मैसं० १.२.१०—जन्य- = जन्मन् (√जन् + भावे यत् प्रत्ययः)।

५. यस्त्वाराय ✕ प्रविवेश जानु जा नि वा दु त ?—पैसं० २.६७.१।
जा नी ह स्मि संस्तीर्यं धेनवो गोपतिं यस् त्वा ददातु प्रथमस् स्वधावान्—पैसं० ५.३१.५।

६. जानिपतयो—अंगुत्तरनिकाय—२.५९।

नोपलभ्यते। वैदिकभाषायां प्राज्यप्रयोगो बहुव्रीहिगर्भस्य जानिशब्दस्य[1] लौकिकसंस्कृतभाषायामपि तथा[2]। विभाषाधिकाराद् जायान्तस्यापि प्रयोगः[3]।

निष्कर्षतः √जन् धातुस्तद्व्युत्पन्नाश्च शब्दा वंशश्रेणीप्रतिपादकाः। जन-जनि-जनी-जान-जानि-जामि-जन्य-जन्यु-जात-जातिप्रभृतयः[4] शब्दा जनन-वाचकाः। ज्ञातिभृत्य-वरस्निग्ध-मातृवयस्यादीनां कुलान्तर्भावः। जननस्य = कुलस्य धारणे पूर्वोक्तानां सर्वेषामपेक्षणीयता। ग्रीकादिभाषासु संस्कृतभाषा-गतजकारस्य प्रायः कण्ठ्य-वर्णत्वेन समधिगमः[5]। केषांचन मतेन तन्मूलं न

---

१. अन्तर्यानिव चरति द्विजानिः—ऋ. १०.१०१.११ = द्विजायः [सायणः]। अस्या इच्छन्नग्रुवै पतिमुत जायामजानये--अथर्ववेदः ६.६०.१ = जाया-रहिताय। न विद्यते जाया यस्येति विगृह्य [सायणः]।
   महाँ इव युवजानिः—ऋ० ८.२.१९ = युवतिर्जाया यस्य स तथोक्तः [सायणः]।
   विजानि [र्] यत्र ब्राह्मणो रात्रिं वसति पापया--पैसं० ६.१६.१; अथर्ववेदः ५.१७.१८।
   सुजानयः—पैसं० १७.३३.२ ['सपत्नीः' इति पाठभेदः]।
   सप्तजानयः--कौसं० २.४७५ [सप्तजामय इति पाठभेदः]।
   सुमज्जानये विष्णवे ददाशति—ऋ० १.१५६.२ = स्वयमेवोत्पन्नाय। जने-रौणादिक इण्। सुमत् स्वयमित्यर्थः (निरु० ६.२२) इति यास्कः। यद्वा—सुतरां मादयति सुमत्, तादृशी जाया यस्य स तथोक्तः [सायणः]।
२. अनन्यजानेः सैवासीद् यस्माज्जाया हिरण्मयी—रघु० १५, ६१ = नास्त्यन्या जाया यस्य तस्य [मल्लि०]।
   सजानि--राजतरङ्गिणी ( ed. calc. ) १.२५८ ('सजामि-' इति पाठ-भेदः Troyer)।
   भूजानिः--नैषध० ७,८६।
३. द्विजायः—सायणः (ऋ० १०.१०१.११)।
४. जानुशब्दस्तु √ज्ञाधातुतो विज्ञेयः, ऊर्ध्वज्ञु-संज्ञुप्रभृतिषु तथोपलब्धेः। Knee इत्यादिष्वपि तथाधिगमः।
५. अर्मेनियन्-भाषायां जायावाचकस्य जानिशब्दस्य तुल्यः शब्दः कैन् (Ken) [ quenà ] इति। अस्य बहुवचने 'कनइ-ख्'—(Kanai-kh इति [kh इति बहुवचनप्रत्ययः]। ग्रीकभाषायां गुनी ( guni ) इति। गाथिक-भाषायां किनो ( qinō ) = एंग्लो-सैक्सन्--क्वेने ( cwene ), पुरातन-

संस्कृतभाषातो बहिः। अत एव कान्तावाचकस्य कना-शब्दस्य[1] सत्ता जनी-शब्दमूलिकेति विन्यासः। कल्पितभारोपीयभाषायां जनि-जान्यादीनां मूल-शब्दः *क्वैना ( quena ) इति। अवेस्ताभाषायां 'कैना' ( qənā ), ( gnā ) इति शब्दद्वयी पत्न्यभिधेया स्त्रीवाचिका च। जायार्थकस्य जनिशब्दस्य तुल्यः शब्दः—अवेस्ताभाषायां 'जनि' ( Jani ), नवपर्सियन्-भाषायां च जन् ( zan ) इति। जायावाचकस्य जानिशब्दस्य तुल्यः शब्दः—अवेस्ताभाषायां 'जानि' ( Jāni ) इति, पुरातनचर्चस्लावोनिकभाषायां च जेना ( zena )= भार्या; जेनिना ( zenin )= भार्यासदृशी[2]। कुरुवर्षीय ( रूसी )-भाषायां संप्रत्यपि जायावाचकस्य जानिशब्दस्य तुल्यः शब्दः 'ज्येना' ( zyená ) इति। तत्र बहुवचनेऽयं 'ज्योनी' ( zyoni ) इति भवति। जनी (= नारी)-वाच्येऽप्येष एव ज्येनाशब्दो 'ज्येन्श्चिना' ( zyenshchina ) इति रूपेणोपतिष्ठते। संबन्धार्थक-( स्क् )-तद्धितप्रत्ययत्वेन 'ज्येन्स्क् (zyensk) =नारीसंबन्धिन्—इति, संज्ञासूचक-'त्'-प्रत्ययत्वेन ज्येनात् ( zyenát ) बहुवचने—ज्येनाति ( zyenati )=विवाहितः पुरुष इति, तिङन्तरूपेण 'ज्येनिश्स्या' ( zyenishsya )='पुरुषस्य विवाहने' इति ज्येनागर्भाः शब्दा दृश्यन्ते[3]।

प्रागार्यकाले ( e ) इति तालव्यस्वरात् पूर्ववर्ती क् ( q ) इति वर्णस्ताल-व्यत्वं प्रपद्यते स्म; ई ( ē ) इति वर्णश्च दीर्घाकारेण विपरिणमते स्मेति कार्ल-

जर्मनभाषायां कुऐने ( quene ), कॉने ( Kone ) इति च; पुरातन-नार्दियन्भाषायां कॉन (Kona) इति; गाथिकभाषायां कीन्स ( qēns ) [तुल० अवे० Jāni, सं जानि–]; an. क्वीन् ( Kvæn), क्वान् (Kvān), एंग्लो-सैक्सन्--क्वीन् ( cwēn ), पुरातन-सैक्सन्-भाषायां च—कुआन् ( kuān ) इति।

—Alois Walde : vergleichendes Wörterbuch der Indogermanischen Sprachen, I Band, Pages 681.

१. पुनस्तदा वृहति यत् कनाया दुहितुः—ऋ० १०.६१.५ = कान्तायाः [ सायणः ]।

२. द्र० २८ पृ० पञ्चमी टिप्पणी।

३. रूसी : प्रारंभिक पाठ्यक्रम २ ( नीना पतापोवा )—शब्दसूची।

ब्रुगमन्-महाशयः[1]। गाथिकादिभाषाणां कीन्स्-प्रभृतिभिः कण्ठ्यादिवर्ण-विशिष्टैः शब्दैर्जानिशब्दप्रक्रमे तुलना नूनं विधेया[2]। जानिशब्दगत इकारो ग्रीकादिभाषासु 'अइ' (ai) रूपेण दृश्यते[3]।

वस्तुतस्तु प्राग्वैदिकवाङ्मये जानिशब्द 'आ' इत्यव्ययमन्तरा न क्वापि स्वातन्त्र्येण प्रयुक्तो जायार्थतया भारोपीयभाषासु जायार्थतया प्रयुज्यमानस्यापि लौकिकसंस्कृतसाहित्येऽसमस्तस्य प्रयोगानुपलम्भाद् महामुनेः पाणिनेर्महती सूक्ष्मेक्षिका। वैदिककाले नूनमस्य जायाभिधेयस्य जानिशब्दस्य स्वातन्त्र्येण प्रयोगः; भारतीयजनभाषासु विश्वार्यभाषासु च तस्य विद्यमानत्वात्।

—:०:—

१. The change from ē to ā took place in the Prim. Aryan period, after the vowel (like Indg. e) had palatalised the preceding q—sounds, e. g. सं० जानि–ष् 'wife; spouse')
—Karl Brugmann : Comparative Grammar of the Indogermanic Languages, I Volume, Pages 62.

२. द्र० २८ पृ० पञ्चमी टिप्पणी।

३. i (इ) in Jani Jāni Schwundstufe zu ai in Gr. gunaik—arm. (pl.) Kanai—kh.
—Wackernagel : altindische Grammatik, Band II, 2; §193, Pages 307.

# शून्यम्

उगवादिभ्यो यत् ( ५.१.२ ) इति पाणिनीये सूत्रे गणसूत्रम्—* शुनः संप्रसारणं वा च दीर्घत्वम् * इति। काशिकायां तु 'तत्संनियोगेन चान्तोदात्तत्वम्' इत्यधिकम्। महाभाष्ये नास्योल्लेखो गणसूत्रस्य। पाणिनीया अपाणिनीया वा वैयाकरणाः[1] 'शुन्य-शून्य-' इति शब्दद्वयं श्वन्शब्दात् प्रत्ययविधानेन, श्वन्शब्दस्य स्थाने 'शुन-शून' इत्यादेशद्वयाद्[2] वा प्रत्ययविधानेन साधयन्ति 'तस्मै हितम्' इत्यर्थकेन।

'श्वन्' इति शब्दस्तु 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्-अर्यमन्-विश्वप्सन्-परिज्मन्-मातरिश्वन्-मघवन्' इत्युणादि-सूत्रेण कनिन्प्रत्ययान्तो निपात्यते। तत्र श्वेतवनवासिविरचितोणादिवृत्तौ ( १, १४६ ) धातुद्वयात् कनिन् प्रत्ययो दर्शितः—'शो तनूकरणे' इति 'टुओश्वि गतिवृद्ध्योः' इति वा। यदा श्यतेस्तदा वुगागमः, यदा श्वयतेस्तदा इकारलोप इति। प्रक्रियासर्वस्वीय उणादिखण्डे ( १, १५० ) तु—'आशु गच्छति—श्वा' इत्येव दर्शितम्।

'श्वन्' इति शब्दस्य तुलना यूरोपीयभाषागतशब्दैः करणीया। तत्र ते शब्दा धावनार्थका मारणार्थकाश्च ( आखेटार्थकाः )। इँग्लिश्भाषायां हाउण्ड्

---

१. शुनो यण् इग् वा च दीर्घत्वम्—चान्द्रव्याकरणम् ४.१.२।
सु ( शु ) नीजिर्वा च दीत्वम् [ वा० ]—जैनेन्द्रव्याकरणम् ३.४.२।
शुन्यशून्योधन्यनभ्याः—३.२.११—शुन्यादयः शब्दाः श्वादीनामापादपरिसमाप्तेरर्थेषु यान्ता निपात्यन्ते। श्वभ्यो हितं शुन्यम्। शून्यम्—शाकटायनव्याकरणम्।
शुनः संप्रसारणं दीर्घश्च वा—सरस्वतीकण्ठाभरणम् ४.४.१८६।
शुनो वश्चोदूत्—७.१.३३—आतदोऽर्थेषु शुनो यः स्यात्। वश्चोदूद्रूपः। शुन्यम्-शून्यम्—सिद्धहैमशब्दानुशासनम्।
हिते गवाद्यवर्गान्तादयः। गव्यं हविष्यं शून्यम्—प्रयोगरत्नमालाव्याकरणम् ११८९ शुने = कुक्कुराय हितं शून्यम् ( गूढप्रकाशिका )।

२. ५६७ शुनः शुनशूनौ च। शुन्यम्, शून्यम्—संक्षिप्तसारव्याकरणम्। शुन इत्यस्मात् तस्मै हितादावर्थे यद् भवति। शुन शून इत्येतावादेशौ च भवतः —गोयीचन्द्रकृतटीका।

( hound ), म० इँग्लिश्भाषायां हाउण्ड् ( hound ) इति हुण्ड् (hund) इति च। एँग्लोसैक्सन् भाषायां हुण्ड् ( hund )=पु० सैक्सन्-हुण्ड् ( hund )=पु० फ्रिजियन्—हुण्ड् ( hund ), हॉण्ड ( hond )= डच्--हाण्ड ( hond )=म० नि० जर्मन्--हुन्त् ( hunt ), नि० जर्मन् हुन्द् ( hund )=पु० उ० जर्मन्, म० उ० जर्मन्--हुन्त् ( hunt ), जर्मन्--हुन्द् ( hund )=आइस्लैण्डिक—हुन्द्र ( hundr )=स्वीडिश्, डैनिश्—हुन्द् ( hund )=गाथिक्--हुन्द्स् ( hunds )। उल्लिखितो दकारो लैटिनादिभाषासु नोपलभ्यते : लैटिन—कनिस् ( canis )=ग्रीक् कुओन् ( kuon ), कुन् ( kun )=लिथुआनियन्—स्जुनिस् (szunis), स्जुओ ( szuo ); षष्ठ्यां स्जुन्स् ( szuns )=पु० प्रसियन्—सुनिस् ( sunis )=पु० आयरिश्—कू ( cū ), षष्ठ्यां कॉन् (con)=गएलिक्—कू=वेल्श्—कि ( ब. व. क्वन् )=जेन्द्—शुनिस् ( cunis )=संस्कृत—श्वन्=कुक्कुरः। तुल०—रसन्, पोलिश्—सुक ( suk ), हंगेरियन्-स्जुक ( szuka ) प्रभृतयः कुक्कुरार्थकाः शब्दाः। यूरोपेऽयं श्वा मृगयार्थं प्रयुज्यते। तत्र ऋक्षशशहरिणशृगालशिशुमार ( otter )-प्रभृतीनामाखेटार्थमस्योपयोगः[१]। नूनमयमाश्चर्यकः।

शुनासीरावित्यत्र शुनशब्दव्याख्यायां यास्कः—'शुनः=वायुः—शु[२]= एत्यन्तरिक्षे' इति। पाणिनिना गत्यर्थकः √शुन्[३] धातुः पठितो धातुपाठे। ततः कुक्कुरवाचकः शुनक[४]-शब्दः सिद्ध्यति। वस्तुतो गतिवृद्ध्यर्थकात् √श्वि इति धातोर्विकासमापन्ना एते शब्दाः। प्रथमतः शु-शब्द आश्चर्यको जातस्तदनन्तरं शुन-शून-शब्दौ वाय्वर्थकौ वृद्ध्यर्थकौ[५] वा।

१. William Dwight Whitney : The Century Dictionary.

२. √शु १।९२४ गतौ—पाणिनीयधातुपाठसमीक्षा, ४८३ पृ०।

३. √शुन ( शुन ) ६।५६ गतौ—तदेव पुस्तकम्, ४८५ पृ०

४. उणादौ २।३२ क्वुन्।

५. शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम्।
शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय॥
—ऋ० ४.५७.४=शुनाख्यो वाय्विन्द्रयोरन्यतमः सुखकृद् देवः [ सायणः ]।

शुनं हुवेम मघवानमिन्द्रम्—ऋ० ३.३०.२२; १०.८९.१८; १०, १०४, ११=वृद्धम् [ सायणः ]।

मा शूने भूम सूर्यस्य संदृशि—ऋ० १०.३७.६=प्रवृद्धाय दुःखाय [सायणः]।

आखेटार्थमाशुगमनकारित्वादेव श्वन्-शब्दः श्विधातोः, शुनकशब्दश्च श्विधातोर्विकारसमापन्नाद् √शुन् इति धातोर्ज्ञेयो व्युत्पन्नः। अत एव कारणाद् वेदेषु शुन-शब्दो न क्वापि कुक्कुरार्थो लभ्यते समासादृते[1] इति मैक्स मूलर-महोदयस्य मतं न निष्कल्मषम्, ऋग्वेदेऽनेकत्र समासाभावेऽपि कुक्कुरवाचकस्य 'श्वन्' इति शब्दस्य दर्शनात्[2]। एवं सत्यपि वाय्वर्थकस्य वृद्ध्यर्थकस्य च शुनशब्दस्यैव प्राज्यता। शुनाय=वायवे हितम् इति शुन्यम्=आकाश इत्यस्माकं मतम्। तु० 'मातरि-श्वन्' इति शब्दः। शुन्यशब्दस्य वैदिकवाङ्मये न क्वापि प्रयोगः। साहित्यदर्पणे[3] प्रयोगस्तु व्याकरणानुसार्येव पश्चात् प्रकल्पितः। प्रादेशिकीषु भाषासु[4]

१. There is not a single passage where शुनम् could be taken for dog. But there are compounds in which शुन would seem to have that meaning.
Max Müller : Lectures on the Science of Language, Vol. II, Pages 525.

२. जम्भयतमभितो रायतः शुनो हतम्—ऋ. १.१८२.४—शुनः=श्वसदृशान् [ सायणः ]।
अवर्त्या शुन आन्त्राणि पेचे—ऋ० ४.१८.१३.

३. शुन्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः—साहित्यद० १ परिच्छेदे—शब्दकल्पद्रुमः। द्र० २१ पृ० साहित्यदर्पणः ( निर्णयसागर-, १९१५ ई०।

४. १२५६७ पालि—सुञ्ञ 'empty,' n. 'emptiness'; प्राकृ. सुण्ण—'empty' n. 'empty place'; दमेली (दर्दिक्)—सून 'empty'; कश्मीरी—शून्‌ ( śuñ ), शुन्नु ( śüñü ), शिन्‌ ( śiñ ), शिन्नु ( siñü ) m. empty place; सिन्धी—सुन्नु, सुन्नो 'barren, desolate'; लहँदा-( जटकी )-सुंञ् f. 'desert'; पंजाबी—सुन्न् f. desolation,' सुन्ना 'desolate, quiet'; कुमायुँनी—सुनो 'empty, deserted'; नेपाली—सुन् 'nothing'; म. बंगाली—सून; उड़िया—सुन 'empty, lonely, still'; भोजपुरी—सून 'empty'; पु० अवधी—सून, सूना; हिन्दी—सुन, सून 'empty'; गुजराती—सून् n. 'emptiness, numbness, nought,' सुनुं, सूनुं, सून् 'empty,' मराठी—सुना; कोङ्कणी—सुन्नें 'nought'; सिंहली—सुन्, हुन् 'empty, emptiness.'

यूरोपीयभाषासु[1] च ह्रस्वोकार-दर्शनाद् शुन्यसत्तावगम्यते।

पाश्चात्यभाषाशास्त्रविदो ब्रुग्मान्-वाकरनागल-प्रभृतयो महानुभावा मौनमाललम्बिरे शून्यशब्दविषये। संभवतः शुने हितं शून्यमिति व्युत्पत्ति-र्नाधिरूढा तन्मतिवर्तनीम् इतिहासानाश्रयिणी। नवीनस्य प्रबोधस्य चानुद्गमाद् मौनालम्बनम्। टी॰ बरो-महाशयस्तु व्युत्पत्त्यानैतिह्यझञ्झावातप्रकम्पितः श्वादिविचारावहेलापूर्वकं कति (काफिरी)-भाषायाः 'चुइँ' इति शब्दं शून्य-शब्दापेक्षया पुराणतरं दर्शितवान्[2]। काशिकाविवरणपञ्जिकायां बृहच्छब्देन्दु-

---

अश्कुन् (काफिरी)—शुनि (cuni)—'empty,' वैगाली (काफिरी)—शुने—(cune–), शुनै-स्तो (cunɔ-sto), शों-स्ता (co-stä), कति or कतेइ (काफिरी)—चुइं (cui), लौड़ोवानी (पशइ)—शुनी।

—R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages.

१. शून- 'geschwollen, aufgedunsen' [पु॰ आइस्लैण्डिक्—हून्न् (hūnn) usw.; über सं॰ शून-म्, 'Mengel' s. Thieme KZ.69, 172 f]; शून्य—'leer' [und अर्मेनियन्—सुन् 'sehr gering, entblößt von']

—Julius Pokorny : Indogermanisches etymologisches Wörterbuch, Pages 592.

लिथुआनियन्—शौंनस् (śaunas), शौंनुस् (śaunús) ,derb, tüchtig,' पशुने, पशूने (Pasune), Kraft, Stärke '[ : सं॰ शुन-म्, Persson Beitr. 19, 2, der auch पु॰ लिथु॰—शौलिस् (śaulis), 'Hüfte', शुक, Heuhaufen auf dem Felde,' शूस्निस् (śusnis) 'Haufen,' सूतिस्, 'Holzstoß', शूतिस् 'Haufen Steine oder Holz' anreihen möchste ?? ].

—तदेव पुस्तकम्, Pages 594.

२. The intermediate forms S', Z, Zh will explain most of the Indo-Iranian developments, as they will the Balto-Slavonic, but it is likely that before complete assibilation there was an affricate stage. Evidence of this is preserved in the Kafiri dialects, which occupy an intermediate position between Indian and Iranian. The treatment that occurs in Kati duc'10' and cui 'empty' for

शेखरे च कल्पनाकोटिपाटवाच्छन्नमैतिह्यम्। प्रक्रियासर्वस्वे भट्टनारायणः—'निर्जनदेशस्य श्वप्रायत्वाच्छून्यम्' इति लिखन् 'निर्जनदेशस्य सूकरप्रायत्वम्' इति तथ्यं न विचारितवान्। शून्यताप्रियस्य संवन्धे 'इकड़ा'-शब्दः सूकर-वाचको बुन्देलखण्डीयो मननीयः। वाचस्पत्यकोशकर्तुः 'शूनायै=प्राणिवधाय हितम्, रहस्यस्थानत्वात्' इति मतमपि शून्यशब्दसंवन्धे न रुचिकरम्, सर्वत्र 'सूना' इत्यस्यैवोपलम्भात्[1], ऐतिह्यप्रमाणाभावाच्च।

वस्तुतस्तु √श्वि (टुओश्वि) 'गतिवृद्ध्योः' इत्यस्य धातोर्निष्ठायां 'यस्य विभाषा' ७.२.१५ इतीट्प्रतिषेधः। यजादित्वात् संप्रसारणम्, दीर्घः। एवं हि 'शून-' इति शब्दो भावे समृद्ध्यर्थकः[2], कर्तरि च वृद्धार्थकः[3]। वयवाधारकस्य विहायसः प्रवृद्धत्वेऽपि रिक्तता तदीयेति शून-शब्दः शून्यार्थकत्वेन दारिद्र्यार्थकः[4]

---

instance (संस्कृत—दश, शून्य–) seems clearly to reflect a form more ancient than that of Sanskrit.

—T. Burrow : The Sanskrit Language, Pages 73.

१. मांसमेकः पिंशति सूनयाभृतम्—ऋ० १.१६१.१०=छेदनसाधनेन स्वधितिना [ सायणः ]।

नास्य क्षत्ता सूनानामेत्यग्रतः—शौसं० ५, १७, १४.

पञ्च सूना गृहस्थस्य—मनु० ३, ६८।

अपश्यत् तत्र गत्वा तं सूनामध्ये व्यवस्थितम्—महाभारतम् ३,२०६,१०।

दश सूनासहस्राणि यो वाहयति सौनिकः—मनु० ४,८६=सूनया चरतीति सौनिकः [ मन्वर्थ० ]।

सूनाख्या पुष्पिते पुष्पे जिह्वातले वधालये—इत्यजयः } व्याख्यासुधाख्य-
'सूना पुत्र्यां वधस्थानगलशुण्डिकयोरपि'—इति विश्वः } टीकायाम्।

२. मादुष्कृतौ व्येनसाघ्न्यौ शूनमारताम्—ऋ. ३,३३.१३—शूनम्=समृद्धिम् [ सायणः ]।

३. मा सख्युः शूनमा विदे मा पुत्रस्य प्रभूवसो—ऋ. ८.४५.३६=वृद्धम् [ सायणः ]।

मा शूने भूम सूर्यस्य संदृशि—ऋ. १०.३७.६=प्रवृद्धाय दुःखाय [ सायणः ]।

४. मा शूने अग्ने नि षदाम नृणां माशेषसोऽवरिता परि त्वा—ऋ. ७.१.११=हे अग्ने, शूने=शून्ये पुत्रादिरहिते गृहे, मा निषदाम=मा निवसाम [ सायणः ]। माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः—ऋ. २.२७.१७; २.२८.११; २.२९.७=शूनं शून्यं दारिद्र्यम् [ सायणः ]।

[ तुल० ग्रीक्—केनोस् ( Kenós ), केनेओस् (Keneos); ईओलिक्-भाषायां केन्नोस् ( kennos )[१] ]। एवं खलु शूनशब्दाद् शून्यार्थकात् स्वार्थे यत् प्रत्यय इति शून्यशब्दनिष्पत्तिः[२]। शून-शब्दस्य शुन-शब्दवद् वाय्वर्थकत्वे तु [ वाय्वर्थकता न लभ्यते ] तस्मै हितमित्यर्थे यत् प्रत्ययो विज्ञेयः। शून्यम् आकाशः[३]। तस्य रिक्तत्वान्निष्फलत्वाच्च तुच्छता शून्यशब्दार्थः। आकाशे स्वर्ग इति धिया तद्वाचकशून्यशब्दोऽपि स्वर्गवाचकः ! आकाशस्य रिक्तत्वात् वर्तुलत्वाच्च तद्वाचकः शून्यशब्दो विन्द्वर्थकः। विन्दुस्तु वर्तुलाकारो मध्यावकाशो भवतीति। एवमेवान्येऽप्यर्था ऊह्याः।



१. August Schleicher : Compendium der vergleichenden Grammatik der Indogermanischen Sprachen, Pages 179.

Keneós ( *Ke-ne-Fós ) leer, एटिक्–( उपभाषा ) Kenós, ion. (आयोनिक्) Keinós, aus *Ke-n-Fós : √Kevo : kū Schwellen, mit Infix n(e) ? vgl. सं. शून्य-स् leer, Koilos, von derselben Wurzel; Hübschmann Arm. Gr. 490 vergleicht allein arm. sin leer, eitel. Kenów leere aus.=शून्यता।

—Dr. Walther Prellwitz : Etymologisches Wörterbuch der Griechischen Sprache, Pages 216.

२. पैसं. १७.१४.५।

३. स वै त्वाष्ट्रवधो भूयानपि पापचयो नृप।
नीतस्तेनैव शून्याय नीहार इव भानुना॥
—भागवते ६.१३.२०।

# कर्मठः

'सप्तम्यन्तात् कर्मशब्दाद् घट इत्यर्थे अठच् स्यादित्यर्थः' इति बालमनोरमाकारः। तत्त्वबोधिनीकारस्तु—सप्तम्यन्तात् कर्मन्-शब्दाद् 'घटते' इत्यर्थेऽठच् स्यादिति। समर्थानां प्रथमाद् वा (४–१–८२) इति नियमेन सूत्रे प्रथमोपस्थितत्वात् कर्मशब्दाद् अठच् प्रत्ययः 'कर्मणि घटः' इत्यर्थे। घटत इति घटः—पचाद्यच्। 'इत्यर्थे' इत्यस्य सर्वत्र योजना कर्तव्या यत्र प्रथमान्तता[1]। सप्तम्यन्ततायां तु सुस्पष्टतैवेति तत्र योजनाऽनपेक्षिता। यत्र तिङन्तता तत्रापि 'इत्यर्थे' इत्यस्य योजना कार्या[2]। 'इत्यर्थ'-प्रकाशकपदेषु सर्वत्र प्रथमान्ततैव नास्तीति[3] सूत्रकारस्य सूत्रनिर्माणपद्धतिर्न समाननियमानुसारिणी। सारस्वतव्याकरणे तु 'इत्यर्थे' इत्यस्योल्लेखः[4]।

जैनेन्द्रशाकटायनेतिव्याकरणद्वयमतिरिच्य सर्वत्र व्याकरणेषु 'घटते' इत्यस्य प्रयोगः[5]। शाकटायनव्याकरणे तु व्याख्यायामपि 'घटते' इति

१. ४,१,९२; ४,२,७; १०; १६; ६८; ६९; ७०; ४,३,२५; ३८; ३९; ५२; ५३; ७४; ८९; ९०; १०१; ११२; १२०; १३४; ४,४,२; ३; ४७; ५०; ५१; ५५; ५७; ६१; ६५; ६९; ८४; ८६; ८७; ८८; ९५; ९८; १०७; ११९; १२१; १२३; १३४; ५,१,५; ३७; ४२; ४३; ४५; ५६; ५७; ७३; ७७; ७९; ८०; ९३; १०४; १०९; ११५; ११७; ११९; ५,२,५; ११; १५; १९; २२; ३५; ३६; ४५; ६३; ६८; ६९; ७८; ८५; ९०; ९२।

२. ४,२,५९; ४,३,५१; ८३; ८५; ८६; ४,४,२; ५; ८; २७; २८; २९; ३०; ३२; ३३; ३४; ३५; ३६; ३७; ३९; ४०; ४१; ४२; ४३; ४६; ६०; ६६; ७२; ७६; ८३; १३७; ५,१,१६; ५२; ६३; ७२; ७४; ९६।

३. ४,३,८५; ११५; ११६; ४,४,२२; २६; ९०; ९२; ९३; ९६; ११०; १२२; १३५; १४०; १४३; १४४; ५,१,६०; ९९; ५,२,१; ९; १३; ४७; ४८; ६५; ६६; ६७; ७०; ७२; ७९; ८१; ८२; ८९; ९०; १२५।

४. कर्पणष्ठो घटते इत्यर्थे ७१०—सिद्धान्तचन्द्रिका।

५. कर्मणि घटतेऽठच्—चान्द्रव्याकरणम् ४,२,३६। तत्र घटते कर्मणोऽठच्—सरस्वतीकण्ठा० ५,२,५२। तत्र घटते कर्मणष्ठः—सिद्धहेमशब्दानु० ७,१,१३७। ५४ ठः कर्मणस्तत्र घटते (तद्धितपरिशिष्टम्)—संक्षिप्तसारव्याकरणम्।

परित्यक्तः[१]।

अठच्-प्रत्ययेऽकारोच्चारणं ठस्यैकादेशनिवृत्त्यर्थम् इति काशिका[२]। चकारोच्चारणं चित्स्वरार्थमिति केनापि नोक्तम्, प्रयोगाणां राजतरङ्गिणी-भट्टिकाव्यातिरिक्तानुपलब्धेः! सूत्रमिदं पश्चान्निवेशितमष्टाध्याय्यामित्यपि नास्ति मनोरमम्, महाभाष्ये[३] कर्मठशब्दोपलब्धेः। महाभाष्यकारात् पूर्वं कात्यायनाच्च परं निवेशने नास्ति प्रबलं प्रमाणम्।

अत्र तावत् 'कर्मणि घटः' इत्यर्थ उपन्यस्यते। कर्मणि चेष्टमानः=प्रयतमान[४] इत्यर्थे प्रावीण्यार्थो शूरतार्थो वा न घटते। अमरसिंहेन तु कर्मठशब्दस्यार्थः—'कर्मशूरः'[५] इति कृतः, तट्टीकाकारेण भानुजिदीक्षितेन च 'प्रयत्नेन प्रारब्धकर्मपरिसमापकः' इति। बालमनोरमायां तु 'घटते=व्याप्रियत इत्यर्थः' इति कर्मव्यापृतः, कर्मव्याप्रियमाणो वा कर्मठ इति तदैदम्पर्यम्। नैतेनापि प्रारब्धपरिसमापकत्वस्य गतार्थता। प्रारब्धपरिसमापकत्वे 'कर्मान्तिक-'[६] इति शब्दो वाल्मीकीयरामायणे (१,१३,७;३२) नूनं प्रयुक्तः किन्तु नेहार्थस्तेन कोऽपि। भट्टिकाव्यस्य टीकायां जयमङ्गलेन 'यागक्रियानिष्पादकः' इत्यर्थो व्यधायि कर्मठशब्दस्य[७]। अयं तु याग-क्रियानिष्पादकरूपोऽर्थो नास्ति तदीयः, क्रतुशब्दसंनिधानेन तद्भावार्थत्वात्। राजतरङ्गिण्यामपि धर्मकर्मनिपुणोऽर्थो नास्ति कर्मठशब्दस्य, तत्रापि सुकृतशब्दस्य संनिधानात्[८]।

---

१. कर्मणो घटः—३,३,१०१—कर्मणि घटः, घटिता, घटमानः कर्मठः पुरुषः।

२. अठचि 'नस्तद्धिते' इति टिलोपः। अठचि ठस्य अङ्गात् परत्वाभावादिका-देशाभाव इति भावः—बालमनोरमा।

३. एवमपि कर्मठ इत्यत्र प्राप्नोति—ठस्येकः ७,३,५०।

४. गत्यर्थकर्मणि द्वितीया-चतुर्थ्यौ चेष्टायामनध्वनि (२,३,१२) इति चेष्टा मानस्येव न भवति।

५. नामलिङ्गानुशासनम्—३,१,१८। वैजयन्ती—२०७, १४३। अभिधान-चिन्ता० ३५४।

६. कर्मान्तिकान्=आसमाप्तिकर्मनिर्वाहकान् (भृत्यान्)—तिलकटीका।

७. ऐहिष्ट तं कारयितुं कृतात्मा क्रतुं नृपः पुत्रफलं मुनीन्द्रम्।
ज्ञानाशयस्तत्र ततो व्यतानीत् स कर्मठः कर्म सुतानुबन्धम्॥
—भट्टि. १,११=यागक्रियानिष्पादक इत्यर्थः (जय०)।

८. संपूर्णपुण्यमहिमा मर्त्यमाहात्म्यमन्दिरम्।
पश्च हस्तप्रदश्चक्रे मठं सुकृतकर्मठः॥
—राजत० ५, २४।

कस्तावत् पुनः पाणिन्यभिप्रेतः 'कर्मणि घटः' इत्यर्थे विहितस्य ठस्याभिप्रायः इति चिन्तायां पाश्चात्या भाषाशास्त्रविदो विभिन्नान् दृष्टिकोणानुपस्थापयन्ति। थियोदोर-वेनफाइ-महाशयः कर्मठ-शब्दः 'कर्म-स्थ-'इत्यस्य विकृतं रूपमुपभाषागतं भवेदिति प्रतिपादयति[१]। ठ-प्रत्ययः 'स्थ'-इत्यस्य प्राकृतभाषात्मकं रूपमिति तदभिप्रायः। वाकर्नागलमहोदयस्तु दार्ढ्येन तत्पक्षपोषकः[२]। स त्वेतादृशप्रयोगान् 'स्थ'-विशिष्टानप्युद्धरति महाभारत-मनुस्मृति-गतान्[३] विकर्मस्थ-पापकर्म-स्थ-, स्व-कर्म-स्थ-, इत्यादीन्। तदीयेयं प्रवृत्तिः प्राकृतभाषागतं 'कम्मट्ठाण'[४] (<कर्म-स्थानः) इति शब्दं दृष्ट्वा जाता भवेत् किन्तु प्राकृतभाषायां कर्मठ इत्यर्थेऽन्यार्थे वा कम्मट्ठादयो शब्दा नोपलभ्यन्ते। देशीनाममालायां दधिकलशी-पिठर-हलधर-मुख-वाचकः कमढशब्दोऽवश्यं लभ्यते[५]। वाकर्नागल—महाशयः 'नर्मठ'-शब्दमप्युपस्थापयति। नर्म-ठ इत्यत्रापि 'कर्म-ठ-' इतिवट्ठकारः किन्तु नैतस्य क्वापि साहित्ये प्रयोगः। शमथ-शरठादिशब्देषु 'अथ-' 'अठ-' इति प्रत्ययौ किन्तु तौ धातुभ्यो जायेते। केषाञ्चन मतेन 'षष्ठ-कतिथ-चतुर्थ-' इत्यादिषु थकारो मूर्द्धन्यतां भजन् ठकारत्वेन विपरिणतः 'कर्मठ' इत्यत्र दृश्यते, तन्न समीचीनम्, तस्य पूरणप्रत्ययत्वात्।

आर्० एल्० टर्नर-महोदयस्तु 'इष्ठ' (इष्ठन्)-प्रत्ययगतठकारं 'कर्मठ'-शब्दस्य ठकारे पश्यतीति तन्मतेन कर्मिष्ठशब्द एव कर्मठतां प्रपेद इति। टर्नरमहोदयस्येदं मतं कल्पनामेवावलम्बते, धर्मिष्ठशब्दस्य प्राकृतभाषायां धम्मिट्ठ-[६], सिंहलीभाषायां दामिट्ठ, दमिट्ठ[७] इत्यादीनां विकाराणामुपलभ्यमानत्वात्, 'धम्मट्ठ, दामट' इत्यादीनामदर्शनात्।

---

१. कर्मठः (base कर्मन्, probably a dialect. form of कर्मस्थ-)—
—Sanskrit English Dictionary.

२. द्र० Altindische Grammatik, § 413, Pages 549.

३. सर्वे चापि विकर्मस्था भागं नार्हन्ति सोदराः—मभार० १३,१०५,१०।
पाषण्डिनो विकर्मस्थान् बैडालव्रतिकाञ्छठान्—मनु० ४,३०।
सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम्—मनु० ९,२१४।

४. आचारांगसूत्र (द्र० पाइअसद्दमहण्णवो)।

५. कमढो मंथणिपिढरहलधरमुहेसु—देशीनाममाला २,५५।

६. औपपातिकसूत्र, सुपासनाहचरिअ १४० (द्र० पाइअसद्दमहण्णवो)।

७. R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages.

केचित् 'कर्मनिष्ठ-'[१] शब्दस्य रूपान्तरं 'कर्मठ-' इति वदन्ति। इदमपि 'कर्मस्थ-'-वत्तर्काधारकमुपस्थापनम्। तत्र प्राकृतभाषाप्रभावेण 'स्थ' इति ठकारत्वेन विपरिणमते। अत्र तु प्राकृतभाषाप्रभावो न भवति, ठकारस्य 'निष्ठ' इति शब्दान्तर्गतत्वात्। नैतदपि हृदयावर्जकम्, 'कर्मनिष्ठेऽठच्' 'कर्मस्थेऽठच्' इति वा सूत्रणे लाघवादपि न तथा सूत्रितं भगवता पाणिनिना।

टी० बरो-महाशयस्य पन्थाः सर्वतो भिन्नः। स √कृ धातोर्मर्-प्रातिपदिकाधारेण निर्मितस्य *कर्मृथ-[ *कर्मृत् ( हृ ) ]-शब्दस्य विकसितं रूपं कर्मठ इति प्रतिपादयति[२] तदपि न रुचिरम्, मर्-प्रातिपदिकस्य कर्मठशब्दे नैरर्थक्यात्, मूर्द्धन्यरकारादिसान्निध्याभावेऽप्यनेकेषां धातूनां ठकारान्तत्वाच्च[३]।

अस्य दुर्घटत्वं पर्यालोच्य यद्यपि जैनेन्द्रव्याकरणे[४] निपातनावलम्बनं तथापि तत्रापि वृत्तावर्थः पाणिनिप्रतिपादित एव। एवं तावद् घट इत्यत्र विद्यते किमपि रहस्यम्। महाभारते √घट् धातोरर्थः करणं व्याप्तृतिर्वा।

---

१. अग्निः सप्ति वाजंभरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठाम्—ऋ० १०, ८०, १।
कर्मनिष्ठाः—मनु० ३, १३४
धनुर्वेदे च निष्ठिताः—वा० रा० १, १८, ३७

२. It was observed in dealing with the simple र् neuters that they might either appear with गुण ( ऊधर् ) or by the weak forms of the latter type can be deduced from certain derivatives of मर-stems. कर्मठ—'workman' from *कर्मृथ [ *कर्मृत (हृ)—'work' + à; aspiration as in कपृथ्–] likewise नर्मठ 'Jester' and हर्मुट 'tortoise' [*harmṛt-á—'an animal possessing a हर्मृत, i. e. 'roof or shell,' cf. हर्म्य 'roof'].

—The Sanskrit Language. Pages 148-149

३. √शठ्; √कठ्; √मठ्; √पठ्; √उठ्; √एठ्; √हेठ्; √वठ्; √लुठ्; √हठ्; √श्वठ्; √श्वण्ठ्; √शुठ्; शुण्ठ्; √शाठ्; √वण्ठ्; √लुठ्; √लुण्ठ्; √रुठ्; √रुण्ठ्; √मुण्ठ्; √गुण्ठ्; कुण्ठ्; √अण्ठ्; √कण्ठ् प्रभृतयः। द्र० पाणिनीयधातुपाठसमीक्षा।

४. कर्मठ। ३, ४, १५६—कर्मठ इति निपात्यते। कर्मशब्दादीप्समर्थाद् घटते इत्यस्मिन्नर्थेऽठो निपात्यते। कर्मणि घटते कर्मठः—जैनेन्द्रव्याकरणम्।

द्रौपदी सत्यभामां वदति स्वव्याप्रतिकथाम्[1]। अत्र कर्मठतायाः स्वरूपं तच्चित्रं च दर्शनीयम्। बुन्देलखण्डीयभाषायां स्थैर्यपूर्वकं धैर्यपूर्वकं वा कर्मनिरतौ √'खटवौ'इति धातुः। अयं धातुः संस्कृतभाषागत-√घट् धातुजन्यः। 'तुम इतै नैं खटैहौ' = 'त्वमिह स्थैर्यपूर्वकं कर्मनिरतो न भविष्यसि'। हिन्दी-शब्दसागरे नास्त्येष 'खटना' इति धातुः। महाभारते √घट् धातुः सज्जा-[2] संसक्त्याद्यर्थकोऽपि।

---

१. शतं दासीसहस्राणि कौन्तेयस्य महात्मनः,।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः ॥
महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः।
मणीन् हेम च बिभ्रत्यो नृत्यगीतविशारदाः ॥
तासां नाम च रूपं च भोजनाच्छादनानि च।
सर्वासामेव वेदाहं कर्म चैव कृताकृतम् ॥
—३,२३३,४६–४८।

एतदासीत् तदा राज्ञो यन्महीं पर्यपालयत्।
येषां संख्याविधिं चैव प्रदिशामि शृणोमि च ॥
अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः।
आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ॥
सर्वं राज्ञः समुदयमायं च व्ययमेव च।
एकाहं वेद्मि कल्याणि पाण्डवानां यशस्विनि ॥
मयि सर्वं समासज्य कुटुम्बं भरतर्षभ।
उपासनरताः सर्वे घटयन्ति वरानने ॥
तमहं भारमासक्तमनाधृष्यं दुरात्मभिः।
सर्वं सुखं परित्यज्य रात्र्यहानि घटामि वै ॥
—३,२३३,५१–५५।

२. अथापि घटतेऽस्माकमर्थे वानरपुङ्गवः ॥
—३,२८१,११=सज्जते, चेष्टते (वागीशः)।
घटस्व परया शक्त्या मुञ्च त्वमपि सायकान् ॥
—३,३९,२१=युक्तो भव (वागीशः)।
स भीतस्तत्र तक्षाणं घटमानं शचीपतिः ॥
—५,८,३०=कार्यं कुर्वन्तम् (वागीशः)।

भारोपीयधातू वर्तेते *गैर्-, इति *ग्र्-ऐत्(ह्) इति च। √घट् धातुर्वै √ग्रथ् (√ग्रन्थ्)-धातुरूपान्तरम्[१]। डेविड्स-स्टीड-महाशयौ पालिभाषाया घटिकाशब्दस्य मूलार्थः 'ग्रन्थिः' इति वदतः (द्र० पी० टी० एस्० पालि-इँग्लिश् डिक्शनरी)। तौ तुलनार्थं गन्थ, गण्ठि, गण्ड इति शब्दान् उपस्थापितवन्तौ। 'घटति' इत्यत्रापि √ग्रन्थ् धातुमुपस्थापयतः। ग्रथितः = रचितः, आबद्धो वेति घटः। प्राकृतभाषायां √घट् इत्यस्य √ग्रथ् इत्यस्य चैकं रूपं 'गढ' इति [गढिअ (<ग्रथित-, घटित-)] गढ (<√घट्)—गढइ (हे० ४,११२)। √ग्रथ् (ग्रन्थ्) इत्यस्य गंठ, ग्रन्थिका इत्यस्य च गट्ठिया (अंवगट्ठिया—निचू० १५) इति भवति। हिन्दीभाषायामपि 'गठयाना' इत्यत्र ग्रन्थार्थे, 'गठन' इत्यत्र च √घट् रूपान्तरे 'गठ' इत्यनेन रूपेण समाना ध्वनयः। यथा—√ग्रन्थ् इत्यस्यार्थो रचनादिकं भवति तथा संस्कृतभाषातः (√ग्रथ्>√गठ्>√घट्>√घड्) पुनः प्राकृतीकृतस्य √घड (सक०) इत्यस्याप्यर्था भवन्ति—चेष्टायाम्, निर्माणे, परिश्रमे चेति। प्राकृतभाषायां √घड सकर्मकोऽकर्मकश्च। संस्कृतधातुपाठे पुनरकर्मक एव।

एवं खलु √ग्रथ् धातोस्थकारः √घट् (हि० √गठ्) धातोष्टकारो वा 'कर्मठः' इत्यत्र प्रत्ययत्वेन स्थितः। कर्मठः—कर्मणि ग्रथितो बद्धो व्यापृतो वा। वर्णद्वये शब्दे आदावन्ते चोभयत्र महाप्राणता न तिष्ठतीति ग्रथ् इत्यस्य प्राकृते गढ इति जातम्, पुनश्च √गढ, √गट्ठ इत्यस्य √ग्रथ् इत्यस्य वा संस्कृतभाषायां √घट् इति जातम्, पुनः प्राकृतभाषायां तस्य घड इति जातम्। हिन्दीभाषायाः प्रकृत्यनुसारेण त्वाद्यमहाप्राणताऽन्ते निपतितेति

१. ger—"drehen, winden". Dentalweiterungen : idg. *gr-et (h)—nasaliert *grenth : ags (एँग्लो-सैक्सन्) Cradol, m. "Wiege" (*kradula—"geflochtenes"), ahd. (पु० उ० ज०) Kratto "Korb"(*kraddan–), Krezzo, mhd. (म० उ० ज०) Krezze, nhd. (न० उ० ज०) Krätze "Korb"(*krattian,—tt aus—tn—'oder zur Wzf. mit idg. d ?); सं० ग्रन्थ्—ग्रथ्नामि "winden, knüpfen, einen knoten binden", ग्रन्थः "knoten, mit mind. Lautentw. घटते "sich verbinden, vereinigen mit; eifrig beschäftigt sein" kaus. "zusammenfügen, zustande bringen"

—Alois Walde : vergleichendes Wörterbuch der Indogermanischen Sprachen, I Band, Pages 593—595.

√गठ इति जातम्। तत्र गठ इति रूपान्तरं साक्षात् संस्कृतभाषात एव न तु प्राकृतभाषातः। प्राकृतभाषातस्तु सति रूपान्तरे '√गढ़ना, √घड़ना' इति वा जायते। प्राकृतभाषारूपान्तरेऽप्यन्यतर आद्यमहाप्राणतां परिजहाति।

'कर्मणि घटः' इतिवत् कर्मसु निबद्धम्[1], कर्मणि निबद्धाः[2], धर्मशास्त्रेषु निबद्धाः[3], वाचि बद्धाः[4] -प्रभृतयो लभ्यन्ते। ऋग्वेदेऽपि 'ग्रीवायां बद्धः'[5] इति प्रयोगः। फलतः कर्मठशब्दः कर्मव्यापृत्यर्थकः। तुलसिदासेन[6] कर्मठशब्दस्यार्थः कर्मकाण्डीति कृतः, स नूनं भक्तिकाव्यगृहीतः, अन्यथा राजतरङ्गिण्यां 'सुकृतकर्मठः' इत्यत्र सुकृतविशेषणं निरर्थकम्, कर्मठ इत्यनेनैव तस्य चारितार्थ्यात्।

√ग्रथ इत्यस्य थकारष्टकारतां ठकारतां च प्राप्तः। टकारस्य ठकारतां गच्छतः संबन्धे निरुक्तकारस्य शिरिम्बिठशब्दनिरुक्तिनिंदर्शनम्। 'शिरिम्बिठो मेघः। शीर्यते बिठे। बिठम् = अन्तरिक्षम्' (निरु० ६,३०)। बिठं बीरिटेन[7] व्याख्यातम्। कटम्भरा>कठम्भरा, कटिल्लकः>कठिल्लक इति शब्दद्वयमपि तुलनीयम्। काश्मीरीयभाषा—छिठ् (<चित्रम्)—१६६ पृ०।

द्रविडभाषाया घटवाचकः कुटम् इति कोड इति वा संस्कृतभाषायाः कुटम् इत्यस्य मूले विद्यते। घटशब्दमूले च कोड इति गुडक इति वेति मतं

१. निबद्धं स्वेषु कर्मसु—मनु० ४,१५५।

२. आबद्धा मानुषाः सर्वे निबद्धाः कर्मणोर्द्वयोः।
दैवे पुरुषकारे च परं ताभ्यां न विद्यते॥
—मभार० १०,२,२।

३. अथ गाथा यमोद्गीताः कीर्तयन्ति पुराविदः।
धर्मज्ञा धर्मशास्त्रेषु निबद्धा धर्मसेतुषु॥
—मभार० १३,४५,१७।

४. दासाः स्म सर्वे तव वाचि बद्धाः।
—मभार० ३,११३,१३।

५. ग्रीवायां बद्धो अपिकक्ष आसनि—ऋ० ४,४०,४।

६. करमठ कठमलिया कहै ज्ञानी ज्ञान विहीन।
तुलसी त्रिपथ बिहाइगो रामदुआरे दीन॥

७. बीरिटम्=अन्तरिक्षम्—भियो वा भासो वा ततिः—नि० ५, २७।

विचारणीयम्[1]। नौवाचकस्य कटत्तु ( कटत्ति ) इति शब्दस्य घटरूपेण विपरिणतावपि न किमपि दृढं प्रमाणम्[2]।



१. १३७६ ( तमिल )—कुटम् waterpot, hub of a wheel. मलया०—कुटम् waterpot, कोताभाषाम्—कोडम् waterpot with small mouth. तोदभाषायाम्—कुड्की small pot, कन्नड्—कोड earthen pitcher or pot; कुडिके small earthen, metal or wood vessel; गुडुवन, गुडाण larg water vessel used also for storing grain; earthen pot used for churning. कोडगुभाषायाम्—कुडिके pot in which food ( esp. rice ) is cooked. तुलुभाषायाम्—कुड्कि, कुड्के, गुड्के small earthen vessel. तेलुगु—कुडक, कुडुक cup, bowl, scoop, any cup-like thing; गुडक, कुडक shell of a fruit prepared to serve as a snuff-box etc., small metal box.

—A Dravidian Etymological Dictionary.

२. ......( तमिल् ) कट—go, proceed, pass ( as time, water, clouds etc. ), कटत्तु (कटत्ति)—boat. (तमिल; मलया.) कटल—sea.

—तदेव पुस्तकम् ।

# नेदीयस्

अन्तिकबाढयोर्नेदसाधौ (५.३.६३) इति पाणिनीयेन सूत्रेणाजाद्योः परतः 'अन्तिक' इति स्थाने 'नेद' इत्यादेशो विधीयते। सर्वाणीमान्यन्तिकानि, इदमेषामतिशयेनान्तिकम्, नेदिष्ठम्। उभे इमे अन्तिके, इदमनयोरतिशयेनान्तिकम्, नेदीयः। इदमस्मान्नेदीयः। यद्यप्येवं काशिकायां क्लीबलिङ्गत्वेन साधितोऽयम्, तथापि बाढशब्दवन्नैष क्रियाविशेषणः। 'साधीयोऽधीते' इत्यत्र यथा क्रियोपस्थानम्, तथा तत्र तस्यासत्त्वात्। ऋग्वेदे नूनमयं कतिषुचित् स्थलेषूपस्थाप्यते[1]।

अन्तिक-शब्दस्य मूले तु 'अन्ति' इति विराजते। ग्रीक्-भाषायां संमुखार्थकः 'अन्ति' (anti) शब्दो लभ्यते[2]। वेदेष्वपि 'अन्ति'-शब्दः समीपार्थको दृश्यते[3]। सप्तम्यन्तोऽन्त-शब्दोऽपि तथा[4]। अयमन्तिकोऽनेकधा व्याख्यातो व्याख्यातृभिः। तत्रादौ निरुक्तकारो यास्कः—'अन्तिकं कस्मात्—आनीतं भवति'[5] इति प्रतिपेदे। निरुक्तविवृतौ 'संनिकृष्टत्वात्' इति हेतुरानीतस्य प्रदत्तः। भानुजिदीक्षितस्त्वन्यथैव व्याख्यत्—'अन्तोऽस्यास्तीति। ठन् (५.२.११५)' इति। एतयोः कतरा व्याख्या ग्राह्या? निरुक्तकारास्तावच्छब्दसाम्यम् इङ्गन्ति—आनीत > आन्ति > अन्ति > अन्तिक—इति; वैयाकरणास्तु शब्दसिद्धिमात्रम्। अन्त-शब्दः खलु स्थानवाची समीपवाची

---

१. इन्द्र नेदीय एदिहि—ऋ० ८.५३.५=अन्तिकतमम् [ सायणः ]।
नेदीयो यज्ञमङ्गिरः—ऋ० ८.७५.५=अन्तिकतमम् [ सायणः ]।
नेदीय इत् सृण्यः पक्वमेयात्—ऋ० १०.१०१.३=अन्तिकतमम् ( निरु० ५.४ ); अन्तिकम्—[ सायणः ]।

२. Hermann Hirt : Indogermanische Grammatik (Teil III, Pages 86 ).
Alois Walde : Vergleichendes Wörterbuch Der Indo-germanischen Sprachen, I Band, Pages 66.

३. अन्ति दूरे पदीष्ट सः—ऋ० १.७९.११।

४. अव स्य शूराध्वनो नान्ते—ऋ० ४.१६.२=समीपे ( सायणः )।
अग्नेरन्ते वृषलः पपाद—ऋ० १०.३४.११=समीपे [ सायणः ]।

५. ३।२ ( ९ खण्डम् )।

च[1]। अस्य सिद्धिस्तु भानुजिदीक्षितेन द्वेधा क्रियते √अम् इति धातुतः, √अन्त् इति धातुतश्च[2]।

अन्ति-शब्दः सप्तम्यन्तः। आर्यभाषास्वाद्यावस्थायामेकं स्थानवाचकं कारकमासीत्। संप्रतीदमधिकरणकारकत्वेन बुध्यते[3]। संभवतो लातिन्-भाषायामिदम् 'इन्'-रूपेण दृश्यते[3]। शनैः शनैर्जना एतदीयमर्थजातं व्यस्मार्षुः। संस्कृतभाषायां तु 'इ'-रूपेण व्यञ्जनान्तशब्देषु रूढिमापन्नम्[3]। ग्रीक्-भाषायां संप्रदानकारकसूचिका विभक्तिरिकारान्ता। इकारोऽसौ वस्तुतोऽधिकरणकारकरूपः स्थानवचनः प्राक्काले बभूव[3]। संस्कृतभाषायामयम् 'अन्ति'-शब्दो वस्तुतः स्थानवचनोऽधिकरणकारकरूपः। ततश्च 'क'—प्रत्ययः। संस्कृतसाहित्येऽलुग्रूपेण सप्तमी बहुशो दृश्यते गविष्ठिरपरमेव्योमन्नित्यादौ, परं सायण ऋग्वेदव्याख्यायामन्तिकशब्दस्य ककारलोपेन 'अन्ति'-पदं साधयामास; तदर्थं च 'अन्तिके=समीपे' इति सप्तम्यन्तेन पदेन संपादयमास[4]।

अन्ते-अन्तेवासिन्—इत्याद्योरेकारः स्थानवचनस्य 'इ' इत्यस्य विकासरूपः, सप्तम्यन्तस्यैव प्रायेण समीपवचनत्वात्। लातिन्-भाषायामयमग्रार्थकः—'अन्ते' ( ante ) इति। गाथिक्-भाषायां संमुखार्थकौ 'अन्द-अन्द्' इति शब्दौ। पुरातननार्दिश्-पु० सैक्सन्-ऐंग्लोसैक्सन्-भाषासु 'अन्द्' इति; पुरातनजर्मनभाषायाम् 'अन्त्' 'इन्त्' इति; मध्यजर्मनभाषायां निम्नजर्मनभाषायां च 'अन्त्' 'ऐन्त्' इति, पु० जर्मन-भाषायाम् 'उन्त्स' ( unzi= untzi ) = अन्ति, पु० सैक्सन्-भाषायाम् 'उन्द्' = अन्ते 'उन्ति', 'उन्त्,' ( उन्द्+ते ), उन्तो ( उन्द्+तो ); इंग्लिश्भाषायाम् 'अन्टू' ( unto ) = अन्ते[5]।

---

१. पृथिव्या अन्तमापुः—ऋ० १.३३.१० = स्थानम् [सायणः]।
२. अमति। अम गतौ (भ्वा० प० से० )। बाहुलकात् तन्। अन्तति वा। अति बन्धने (भ्वा० प० से० ) अच् ( ३।१।३४ )—अमर० २.८.११६।
३. Max Müller : Lectures on the Science of Language, Pages 218-221.
४. 'कादिलोपो बहुलमिति वक्तव्यम्' इत्यन्तिकशब्दस्य ककारलोपः—सायणः ( ऋ० १.७६.११ )।
५. Alois Walde : Vergleichendes Wörterbuch Der Indogermanischen Sprachen, I Band, Pages 66.

अयम् 'अन्ति' वा > 'अन्ते' वा शब्दः खलु विपर्यासेन तकारेऽकारे चान्तं गते सति—अ-न्-त्-ए > अ-न्-ए-त् > न्-ए-त्-अ > 'नेद' इति संवृत्तः। एष 'नेद' धातुरूपेणापि प्रयुज्यमानः। नेद-शब्द-मूलानवगतौ केचनाचार्याः √नेद्धातुत ईयसुन् प्रत्ययं कल्पयन्ति[1]। महामुनिना पाणिनिना 'अन्तिकबाढयोर्नेदसाधौ' इत्यस्मिन् सूत्रे 'सनीड'—'निकट'—इत्यादिशब्दानन्तरेण 'नेद' इत्यस्य स्थानित्वेन 'अन्तिक'-शब्दस्य स्थापनेन √नेद् इति धातोर्मूलं व्याख्यातमप्रत्यक्षतः। चान्द्रादिव्याकरणेष्वपि स्थान्यन्तिक-शब्द एवोपन्यस्तः[2]।

केश्चित् तु 'नेद' इत्यत्र 'न' 'इद्' पदद्वयं यथास्थानं द्रष्टव्यम् (तु० पदपाठः)। 'निकटवर्तिन्'—इत्यर्थे विशेषणपरकपदम्। व्युत्पत्तिरुवज्ञाता। अन्ति⌊निकटे⌋(√विद्⌊=सत्तायाम्= * निवासे⌋ > भावे) वेद-> वहुव्रीहिसमासः; * अन्तिवेद-> नैरुक्तप्रक्रिया * नि-वेद-> *न्येद-> यथानिर्दिष्टम्[3]।

केषाञ्चन मतेन त्वयं 'नेद'-शब्दो निलयार्थक-'नीळ'—रूपेण विपरिणतः स्यात्। 'सनीड'-शब्दः समीपार्थकः[4]। क्षीरस्वामी 'नीड'-शब्दव्याख्यानम्—'नीयतेऽस्मिन् नीडम् (निडीयतेऽस्मिन् नीडमिति पाठभेदः) इत्यकार्षीत्[5]। तदीयः शब्दसाधनप्रकारो निरुक्तमनुकरोत्यंशतः। भानुजिदीक्षितस्तु—'नितरामीड्यते। घञ् (३।३।१९)। यद्वा निश्चिता इलन्त्यत्र। इल स्वप्ने (तु० प० से०)। हलश्च (३।३।१२१) इति घञ्। संज्ञापूर्वकत्वान्न गुणः। डलयोरेकत्वम्' इति प्रत्यपादयत्[6]। काशकृत्स्नधातु-

---

१. क्षीरतरङ्गिण्यां दाघृ १/११३ (प) इति धातुस्थले क्षीरस्वाम्याह— "काल्पनिके हि प्रकृतिप्रत्ययविभागे द्राघिमादयः कस्मिंश्चिद् व्याकरणे धातोरेव साधिताः, एवं नेदिष्ठादयो नेदत्यादेः।"

२. बाढान्तिकयोः साधनेदौ—४-३-५१ (चान्द्रव्या०); २-३-५१ (शाकटायनप्रक्रियासंग्रहः)।

३. वैदिकपदानुक्रमकोशस्य संहिताभागे 'नेद'—शब्दटिप्पणी।

४. द्विता वि वव्रे सनजा सनीळे—ऋ० १.६२.७=समानं नीळम् ओको निवासस्थानं ययोस्ते। संलग्ने इत्यर्थः [सायणः]।
समीपे निकटासन्न-सन्निकृष्ट-सनीडवत्—अ० को० ३.१.६६।

५. अमरकोशः २.५.३७ (टी० गणपतिशास्त्रिसंपादितः, त्रिवेन्द्रम्, १९१५ ई०)।

६. अमरकोशः २.५.३७ (व्याख्यासुधा)।

व्याख्याने तु निवासार्थकः स्वतन्त्रो धातुर्लभ्यते—√निड् १।१८६ निवासे=गृहे। नेडति=निवसति। नीडम्=वयसामावास इति तट्टीकाकारः। वस्तुतो निलयो निळय एव नीळः (नीळम्)—नि+√ली। वेदेषु 'ळ'-विशिष्टस्यैवोपलब्धिः[१]।

केषाञ्चिन्मतेन तु समीपार्थकस्य संनिकृष्ट-शब्दस्य 'निकृष्ट'-इत्यंशो 'निकट'-रूपेण विपरिणतः। निकट-शब्दस्य ककारे लुप्ते 'निट'-इत्यंशो 'नीड' इति जातः। पाणिनेः कटच्-प्रत्ययस्तु शब्दसिद्धिप्रदर्शनमात्रपर इति भानुजिदीक्षितो द्वितीयमपि शब्दसिद्धिप्रकारं प्रस्तौति—"निकटति वा। कटे वर्षावरणयोः (भ्वा० प० से०)। अच् (३।१।१३४)" इति[२]।

पूर्वोक्तेषु चतुर्षु पक्षेषु कतमः साधिष्ठ इति विप्रतिपत्तौ तुलनात्मकं व्याकरणमेव मानम्। एतद्धि जटिलसमस्यां समादधाति। अवेस्ताभाषायाम् अन्तिकतरार्थकः 'नज्यह्'—[तु० वाधूलश्रौतसूत्रे 'नेद्यस्' इति] शब्दो लभ्यते[३]। ऋग्वेदीय-नेदीयोवत् अवेस्ताभाषायामपि 'नज्यो'-शब्दः क्रियाविशेषणः। 'नेदिष्ठ'-इत्यस्य स्थाने 'नज़दिश्त' इति दृश्यते तत्र। नवीन-पर्सियन्-भाषायां 'नज्द'=अन्तिकम्, अन्तिके[४]। तुल० पारसीकः 'नज़द् (ईक)'-शब्दो हिन्दीभाषायामप्यधुना प्रचलितः।

अवेस्ताभाषायाम् अनूपसर्गतुल्यः 'अन' इत्युपसर्गः। ग्रीक्-गाथिक-पुरातन-जर्मनभाषास्वपि तथा। पुरातनचर्चस्लावोनिक-भाषायां 'न' इति, लातिन्-भाषायां च 'अन्' इति (तुल० अनेलारे)। संस्कृतभाषास्थ-गमनार्थक-√सद्-धातुतुल्याः—लातिन्-भाषायां 'सेदो' (cedo), ग्रीक्-भाषायां 'होदोस्' (=सृतिः), पुरातन-बुल्गारियन्-भाषायां 'शोद', 'शद'[५]

१. नीळे—ऋ० ४.१.११=निलये, स्थाने [सायणः]।
समानं नीळम्—ऋ० १०.५.२=स्थानम् [सायणः]।
असुरस्य नीळयः—ऋ० १०.९२.६=आवासभूतः [सायणः]।

२. अमरकोशः ३.१.६६ (व्याख्यासुधा)।

३. Karl Brugmann : Kurze Vergleichende Grammatik Der Indogermanischen Sprachen, Pages 469.

४. Alois Walde : Vergleichendes Wörterbuch Der Indogermanischen Sprachen, II Band, Pages 485.

५. Alois Walde : Lateinisches Etymologisches Wörterbuch, Pages 147.

(=गतम्)। गाथिकभाषायां 'नेथ्', पुरातनजर्मन्-भाषायां 'नाह' [क्रि० वि० ]=अन्तिके[1] (तुल० संस्कृतभाषाया 'नि+√सद्' इति)। इण्डोयूरोपियन्भाषायां * सैद्=उपवेशने, निषादे। अयं √सद्>सॅद् अवेस्ता-भाषायां 'ज़्द्' इत्यपि भवति[2]। इत्थं नि+√सद्=निस्द् > निज़्द्>नज़्यह्द्>नेद्यः।

'ड'-वर्णः 'स्द्'>'ज़्द्' इत्यतो निर्गतः, नीडस्तु (नैस्ट nest), नि (under) +√सद् (=To lie) इत्येताभ्याम् इति तदर्थोऽस्ति—'यन्नि-षीदत्यन्तः' (what lies under)[3]। लातिन्-भाषायां 'नीडुस्', किम्रिक्-भाषायां 'निथ,' कार्निशभाषायां 'नीद्,' ब्रेटानिक्-भाषायां 'नेज्' 'नीज,' अर्मे-नियन्-भाषायां 'निस्त,' पुरातनजर्मन्-एँग्लोसैक्सन्-भाषयोः 'नेस्त्,' लिथु-आनियन्-भाषायां 'लिज्दस्,' लेट्टिश्-भाषायां 'लिग्ज्द'; पुरातनचर्चस्लावा-निक्-भाषायां 'ग्नेज्दो,'*ने (इ) ज्दो[4]; इति सर्वे शब्दा नीडार्थकाः[5]।

इत्थमेव√पीडु्=पिस्द्,=अपि+सद्, तुलनीयम्—पिएद्यो (Piedyo) =एपि+सेद्यो (Episedyo); √वाड् तथा√वाड् (=आप्लाव्ये) =वस्द्=अव+√सद्[3]। ब्रुग्मन्-महाशयस्तु भारोपीयतुलनात्मक-संक्षिप्त-व्याकरणस्य १४३ पृष्ठे—*नि-ज़्दो; सं० नीडः, *नि-ज़्डस, लातिन्—सेदो *सेज़्दो (=अग्रे गच्छामि);*पि-ज़्द्—सं० पीडयति (तुल० ग्रीक्—पिएद्यो) इत्यदर्शयत्। टी० बरोमहोदयस्तु व्याख्यारूपेण—दकाराद् आहोस्विद् धकारात् पूर्ववर्तिनो ज़कारस्य (भारोपीयसकारादुत वा प्राचीनतालव्येभ्यो विकसितस्य) लोपं प्राक्तनस्य ह्रस्वस्वरस्य दीर्घीकरणपूर्वकं प्रत्यपादयत[6]।

वस्तुतस्तु 'अनु+√सद्' इत्यस्य स्थाने 'नि+√सद्' [>निज़्द्> 'नेद्'] इति बोध्यम्। नीड-नेदशब्दौ मूलतः संबद्धौ। प्रायः सर्वास्वार्य-

१. Alois Walde : Vergleichendes Wörterbuch Der Indogermanischen Sprachen, II Band, Pages 59.
२. Alois Walde : Lateinisches Etymologisches Wörterbuch, Pages 147.
३. William Hugh Ferrar : Comparative Grammar of Sanskrit Greek & Latin, Pages 50.
४. तुलनी० 'णिड्डु' (<नीड)—द्र० पाइअसद्दमहण्णवो।
५. Alois Walde : Vergleichendes Wörterbuch Der Indogermanischen Sprachen, II Band, Pages 485.
६. T. Burrow : Sanskrit Language, Pages 93 (§ 16 c.)

भाषासु 'न' इत्याहोस्विद् 'नि' इति, √सद् इत्याहोस्वित् सेदो, ज्द इत्येषा-मुपलभ्यमानत्वाद् विहितया तुलनया संस्कृतभाषामयौ नेद-नीळशब्दावपि नूनं नि+√सद्-धातुघटितौ । न्युपसर्गविशिष्टस्य √सद् इति धातोरासन्न-(ता)निवासार्थादृग्वेदमूलकौ[1] । निगूढस्थिति-शयनार्थकोऽप्ययम्[2] ।

—:०:—

१. आँ अपि प्राता निषीदति—ऋ० ७.१६.८=आसीदति [ सायणः ] ।
यन्नूनं धीभिरश्विना पितुर्योना निषीदथः—ऋ० ८.९.२१=निवसथः [ सायणः ] ।

२. देवान् धाद् गुहा निषीदन्—ऋ० १.६७.२=निगूढो वर्तमानः सन् [सायणः] ।
सदीशे यस्य रोमशं निषेदुषः—ऋ० १०.८६.१६=शयानस्य [ सायणः ] ।

# साधीयस्

'अन्तिकबाढयोर्नेदसाधौ' ५.३.६३ इति सूत्रेणाजाद्योः परतः 'वाढ' इत्यस्य स्थाने 'साध' इत्यादेशो विधीयते—अयमनयोरतिशयेन वाढमधीते साधीयः। अयमस्मात् साधीयोऽधीते। बाढशब्दस्तु तावत् 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमः-सक्ताविस्पष्टस्वरानायासभृशेषु' (७.२.१८) इति भृशार्थे निपातनात् साध्यते। इत्थं महामुनिपाणिनिमतेन 'वाढ'-शब्दो भृशार्थकः। वाढमिति भवति भृशं चेत्; वाहितमन्यत्। 'वाह्ट प्रयत्ने' इत्यस्य धातोरेतन्निपातनम्। भानुजिदीक्षितस्तु नामलिङ्गानुशासनस्य (३.३.४४) टीकायाम् "उह्यते स्म। 'वह प्रापणे' (भ्वा० उ० अ०)। क्तः (३.१.१०२)। 'क्षुब्धस्वान्त –' (७.२.१८) इति साधुः" इति लिलेख। प्रथमकाण्डस्य स्वर्गवर्गे तु स एव—'वाह्ट प्रयत्ने (भ्वा० आ० से०)। क्षुब्धस्वान्तध्वान्त-(७.२.८) इति निपातितम्' इति प्रतिपादयामास। क्षीरस्वामिना खलूभयत्र वाह्टधातुत एव वाढशब्दनिपातनसाधुता समाश्रुता।

स्थान्ययं 'बाढ-' इति शब्दः किमर्थकः किंमूलकश्चेति समुदेतीह जिज्ञासा। ऋग्वेदे दृढार्थकः स्थैर्यार्थको वायं सायणेन व्याख्यातो मूर्द्धन्येन 'ळ' इत्यनेन हकारेण च विशिष्टः 'ळह' इति[1]। कैश्चित् तु—'ळह'-विशिष्टता समासेष्वेव समापद्यत इति प्रत्यपादि[2]। तन्न समीचीनम्; अनेकत्रासमासेष्वपि तथोपलम्भात्[3]। वाढ-दृढ-गूढ-प्रभृतिषु ढकारस्य विवरणं 'ळह'-रूपेण समधिगम्यत ऋग्वेदे[4]। ढकारोत्तरं व्यञ्जनसत्त्वे तु 'ळह'-रूपेण न तद्विवर-

---

१ वाळ्हे अश्विना त्रेधा क्षरन्ती--ऋ० १.१८१.७=वाळ्हे दृढे स्थैर्ये निमित्त-भूते सति [ सायणः ]।

२. वाढ--, वाळ्ह ( in compound ) —शब्दसंख्या--६२०२।

—R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages.

३. ऋ० १.१८१.७।

४. एको दृळ्हमवदो वृत्रहा सन्—ऋ० ३.३.५--दृढम् = सत्यमेव [सायणः]। दृळ्हं चिदरुजो गव्यमूर्वम्—ऋ० ३.३२.१६=अतिप्रबलम् [ सायणः ]। दृळ्हा—ऋ० १.३३.१२=दृंहितानि, निरुद्धानि [ सायणः ]।

णम्[1] । 'ळह > ढ' इत्येवंरूपा परिवृत्तिः सुस्पष्टं क्रमिका । अद्यापि 'ड्+ह'-वर्णौ ढकारत्वेन विपरिणतौ लक्ष्येते[2] । आहोस्विद् वेदेषु ढकारस्यैव मूलस्य विवरणेन 'ळह' इति संपन्नम् । नूनं पाणिनीयेषु निपातनेषु किमपि रहस्यमनुगतम् ।

ऋग्वेदस्य वेङ्कटात्मजमाधवकृतभाष्ये शब्दोऽयं वाधार्थः[3] । अत्रैव संहिताभागे विश्वबन्धुमहाशयेन भावपरकपदस्यैतस्य *स्तवनार्थः कल्पितः । अपरत्र चायं विशेषणपरकपदत्वेन स्वीकृतः 'प्राग्र-' इत्यर्थश्च स्थापितः । उपपदसमासे पूर्वपदस्य चास्य 'वाढ'-शब्दस्य 'वाढ < √वृध् ⌊ *प्रगतौ ⌋' इति √वृध् धातुतो व्युत्पत्तिः प्रादर्शि; अर्थश्च 'प्रगति-' इति कल्पितः[4] । अत्र वेङ्कटात्मजमाधवेन नामपरकपदत्वेन 'बहु'-[ शत्रु- ] इत्यर्थः, सायणेन च क्रियाविशेषणत्वेन भृशमित्यर्थो निर्णीतः[5] । पालिभाषायां दृढार्थकः क्रियाविशेषणत्वेनाभिमतः 'ळह'-विशिष्टो वाढ-शब्दः[6] ।

साधु, सुष्ठु, वाढम्, सत्यम् इत्येते शब्दाः संवदन्त्यर्थेषु । तत्र चतुर्षु वाढशब्दः प्रायशो जिज्ञासानन्तरं प्रयुज्यते[7] । एष भृशस्वीकृत्यनुमति-

---

दृळहाम्—ऋ० ५.१९.२=शत्रुभिः साधयितुमशक्याम् [ सायणः ] ।
गूळहम् –ऋ० १.११७.४=निगूढम् [ सायणः ] ।

१. गूढ्वी तमः––ऋ० ७.८०.२=गूढम् [ सायणः ] ।

२. षड् + हलानि=षड्ढलानि ।

३. वाळ्हे—ऋ० १.१८१.७ ।

४. वैदिकपदानुक्रमकोशे संहिताभागस्य टिप्पणी ।
वर्धयित्वा––वा० रा० २.३४.५=संपूज्य ( तिल० ) ।

५. विसृष्टरातिर्याति वाळहसृत्वा—ऋ० १.१२२.१० = भृशं सर्ता, अशङ्कितगमनः [ सायणः ] ।

६. जातक-२, २९३ ।

७. देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः ।
बाढमित्यब्रवीत् सर्वान् पुनश्चेदमुवाच ह ॥
—वा० रा० १.३६.१२ ।
बाढमित्येव गाधेयो वसिष्ठं प्रत्युवाच ह ।
यथा प्रियं भगवतस्तथास्तु मुनिपुङ्गव ॥
—वा० रा० १.५२.१९ ।

सत्यार्थप्रतिपादकः[1]। मूलतश्च[2] वर्धापनार्थकः। शेषास्त्रयः प्रशंसानुमो-

---

वाढमित्यस्य विवरणम्—यथाप्रियमित्यादि (तिल०)।

ऋषिमध्ये महातेजा वाढमित्येव देवताः।

—वा० रा० १.६०.३४=आहेति शेषः (तिल०)।

वाढमित्यब्रवीद् राजा मुनिश्च समभाषत।

—वा० रा० १.६७.१५।

उच्यमानो हि भरतो मया लक्ष्मण! तद्वचः।

राज्यमस्मै प्रयच्छेति वाढमित्येव संस्यते॥

—वा० रा० २.९७.१८।

स एवमुक्तो वाढमित्युक्त्वा—महाभारतम् १.३.१०१।

अथ सा स्त्री तमुवाच वाढमेवं भवत्विति।

—महाभारतम् १३.२०.१।

एवमात्मभुवादिष्टः परिक्रम्य गिरां पतिम्।

वाढमित्यमुमामन्त्र्य विवेश तपसे वनम्॥

—श्रीमद्भा० ३.१२.२०।

वाढमुद्वोढुकामोऽहमप्रत्ता च तवात्मजा।

आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः॥

—श्रीमद्भा० ३.२२.१५।

वाढमर्थः। किं वक्तव्यमेतत्?—महाभाष्यम् १.२.३० (गु० प्र० सं० ३४ पृ०); १.२.६४ (गु० प्र० सं० १११ पृ०)।

१. (क) अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्।

तीव्रैकान्तनितान्तानि गाढवाढदृढानि च॥

—अमरको० १.१.६६,६७।

वाढं मया सा नगरी दृष्टा विद्यार्थिना सता।

—कथासरि० २४.६८।

(ख) भृशप्रतिज्ञयोर्वाढम्—अमरको० ३.३.४४।

„ =उह्यते स्म। वह प्रापणे। क्तः (३. १.१०२) भानुजिदीक्षितः।

(ग) वाढं त्रिषु दृढे क्लीबमनुमत्याम्—नानार्थरत्नमाला।

(घ) वाढमेष दिवसेषु पार्थिवः कर्म साधयति पुत्रजन्मने॥

—रघु० १९.५२=सत्यम् (मल्लिनाथः)।

२. चतुर्थी टिप्पणी द्रष्टव्या ५२ पृष्ठे।

दनयोः[१] । हिन्दीभाषायां च 'वहुत ठीक' 'सही' इति तदर्थकौ । प्राकृतभाषायां च 'दिट्ठिआ वड्ढसि<दिष्ट्या वर्द्धसे' इति तदर्थकः । एवं किल सर्वत्र भृश-(लातिन्[२] —फ्रेक्वेन्स् [frequens])—तात्पर्यमनुगतं परिलक्ष्यते। इह केचित् समामनन्ति—प्राकृतभाषाया वाढ<वड्ढ [<वड्र[३]<वृद्ध-] शब्दोऽस्य मूलम् । बुन्देलखण्डे 'वाढ'-शब्दार्थे 'वड़ी वात' शब्दः प्रयुज्यते। अशोकाभिलेखेषु वाढ-शब्दः 'प्रामुख्यतः' इत्यर्थकः[३] । बश्करिकभाषायां वार्-[<वाढ-]. शब्दः प्रभूतार्थकः[३] । तोरवलीभाषायां 'वार्'-शब्दः स्थूलघनार्थकः[३] । प्राग्ज्योतिषीयभाषायां च 'वारु'-शब्दो विशेषणे सति पृथुतरार्थवाचकः; क्रियाविशेषणे च सुसाध्वर्थकः[३] । काशकृत्स्नधातुव्याख्याने तु √वाढ् १/१८९ इति तीव्रगत्यर्थको धातुः। एतस्माच्छीघ्रगत्यर्थको वाढ-शब्दः साध्यते ।।

संस्कृतवाङ्मये वाढशब्दः क्रियाविशेषण इति क्लीवो नानार्थमालायां

---

१. साधु साध्विति शंसन्तो मिथिलां समपूजयन् ।

—वा० रा० १.४८.१० ।

साधु साध्विति देवास्तामहल्यां समपूजयन् ।

—वा० रा० १.४९.२० ।

सुष्ठु च यातं साधु च यातम्—महाभाष्यम् ६.४.१४९ ।

साधु सुष्ठु शिरस्तस्य मुण्डितम्—मृच्छक० ३७४ पृ० [चौ० सं०]।

साहु हञ्जे (<साधु हञ्जे ! साधु)—मृच्छक० १२८ पृ० [चौ० सं०]।

सुट्ठु दे किदं (<सुष्ठु त्वया कृतम्)—मृच्छक० १४१ पृ० [चौ० सं०]।

२. William Hugh Ferrar : Comparative Grammar of Sanskrit Greek & Latin, Pages 84.

३. Pali—bāḍham 'very much'; Ashokan Inscriptions bāḍham 'chiefly'; Prakrit—bāḍh 'thick'; bāḍham 'extremely'; Bshk. bār 'much, many'; A. O. L. xiii 228 <वड्र—); Tor. bār, & bär 'thick, fat', A. bāru 'larger,' adv. 'very much.'

11225—वड्र 'big' Lex. [Scarcely with F. Edgerton JAOS. 60, 221 <वृद्ध] ।

—R. L. Turner : A Comparative Dictionary of the Indo-Aryan Languages.

तु केवलमनुमत्याम्[1] । पालिभाषायामेव विशेषणत्वेन प्रयुक्त इति ततस्तरप् प्रत्ययोऽपि विहितो विलोक्यते[2] । पाणिनिना यो हि वाढशब्दस्य स्थाने 'साध' इत्यादेशः कृतः, स तु क्रियाविशेषण इति ततो निष्पन्नः साधीयस्-शब्दः सदा क्रियाविशेषणः । समग्रे महाभाष्ये क्रियाविशेषणस्यैव क्लीबिनः साधीयस्-शब्दस्य प्रयोगः पाणिन्यभिमतव्यक्तये साध्वलम्[3] । विशेषणभूतः साधीयस्-शब्दस्तु साधुशब्दात् साधनीयः । अमरकोशोद्घाटनकारः क्षीरस्वामी तु पाणिनिप्रभावितो विशेषणभूतमपि नामलिङ्गानुशासनव्याख्याने तच्छब्दं क्रियाविशेषणत्वेनैव विवृणोति[4] । यद्यपि तत्र विशेषणभूतात् तस्माच्छब्दाद् वाढार्थे प्रत्ययोऽसंगतः, तथापि क्षीरस्वामिनेदमप्रत्याख्याय क्रियाविशेषणा-

---

१. वाढं त्रिषु दृढे क्लीबमनुमत्याम् ।

२. वाळ्हतरं—विनयपि० २.२७०; मिलिन्द० ।

३. उभयगतिस्तस्य भवति साधीयो वा यष्टिहस्तं गमिष्यति ,

—महाभाष्यम् १.१.२३ [ गु० प्र० सं० ३०७ पृ० ]

= क्रियाविशेषणम् अव्ययं वा सम्यगर्थकम् [ नागेशः ] ।

ननु च ये कृतयत्नास्ते साधीयः शब्दान् प्रयोक्ष्यन्ते त एव साधीयोऽभ्युदयेन योक्ष्यन्ते – महाभाष्यम् [ नवाह्नि० (गु० प्र० सं० ३०७ पृ०) ] = साधीय इति क्रियाविशेषणम् । शास्त्रसंस्कारवतां प्रभूतशब्दप्रयोगजन्यबहुपूर्वद्वारा वहुतराभ्युदयफलत्वमित्यर्थः ( कैयटः ) ।

न साधीयो ह्यत्रार्थस्य गतिर्भवति—महाभाष्यम् ( हयवरट्; गु० प्र० सं० १३९ पृ० ) = परमतापेक्षया प्रकर्ष आरोप्यते ( कैयटः ) ।

प्रकर्षगतिर्विज्ञास्यते साधीयो यत्र कर्तारं क्रियाफलमभिप्रैति—महाभाष्यम् १.३.७२ ( गु० प्र० सं० २६५ पृ० ) = साधीय इत्यस्य क्रियाफलेनान्वयः— ( नागेशः ) । वस्तुतस्तु नागेशेन महाभाष्यकारप्रयोगमज्ञात्वा सर्वत्रैकविधमत्र घुणाक्षरन्यायेन क्लीवं विशेष्यं दृष्ट्वा साधीयःशब्दो विशेषणत्वेनाश्रुतः ( वागीशः ) । [ टिप्पणी—केवलं गुरुप्रसादीये संस्करणे ३.१.९४ (१९१ पृ० ) साधीयान् शब्दो लभ्यते, स भ्रष्टः । साधीय इति स्यात्, अन्येषु कीलहार्नादिसंस्करणेषु तथैवोपलम्भात् । ]

४. 'साधीयान् साधुवाढयोः' ३.३.२३५ = अतिशयेन साधु वाढं च साधीयः ( क्षीरस्वामी ) । अत्र व्याख्यानीयमासीत्—अतिशयेन साधुः—साधीयान् इति ।

त्मकः पक्षः स्थापितः । एवं खलु नामलिङ्गानुशासनकारोऽमरसिंहस्तद्व्याख्याता भानुजिदीक्षितश्च सुतरां भ्रान्तौ[१] ।

काशिकायां बाढशब्दस्तदादेशश्च क्रियाविशेषणत्वेन व्याख्यातौ[२] । चान्द्रव्याकरणे 'बाढान्तिकयोः साधनेदौ' (४,३.५१) इति सूत्रव्याख्याने क्रियाविशेषणत्वेन साधितः साधीयस्-शब्दः[३] । प्रयोगरत्नमालाव्याकरणे तु क्रियाविशेषणत्वमस्य सुस्पष्टं संकीर्तितम्[४] । 'अजादी गुणवचनादेव' (५.३ ५८) इति सूत्रेण 'साधीयान्' इत्यादिविशेषणानां साधिमा निर्बाधः पुनः 'अन्तिकबाढयोर्नेदसाधौ' (५.३.६३) इत्यनेन सूत्रेण बाढस्य स्थाने साधादेशः क्रियाविशेषणतामुपपादयत्येतन्निष्पन्नशब्दस्य[५] । वैयाकरणसिद्धान्तकौमुद्यां भट्टोजिदीक्षितैः सूत्रकाराशयमनवबुध्य—साधिष्ठः, साधीयान् इत्युदाहरणद्वयं विशेषणपरकं समुपन्यस्तम् । अनुकरणं चेदं प्रक्रियाकौमुद्याः प्रक्रियासर्वस्वस्य[६] च कृतं तैः । शाकटायनप्रक्रियासंग्रहेऽपि तदेवानुकृतम् (द्र० २.३.५१) ।

क्रियाविशेषणस्य 'साधीयः'-शब्दस्य परम्परा हिन्दीभाषायामद्यापि सुरक्षिता । तत्र विशेषणात्मकम् (अव्ययं वा) इति द्वेधोपलभ्यते प्रयोगः 'सही'-शब्दस्य । विशेषणात्मकः 'सही'-शब्द आरब्यभाषामयः । तदर्थाश्च—१. सत्यम्, २. प्रामाणिकम्, ३. शुद्धम्, ४. हस्ताक्षरं चेति । यद्यपि 'फरहंग आसफिया'-नामके कोशेऽव्ययार्थकमप्येतदारब्यसहीहशब्दस्यैव विकृतं रूपमित्यूरीकृतम्, तथापि 'नूरउललुगात' इति ग्रन्थेऽर्थस्यास्य संबन्धे न कापि व्युत्पत्तिः

---

१. 'साधोयान् साधुबाढयोः' ३.३.२३५ = अतिशयितः साधुर्बाढो वा (भानुजिदीक्षितः) ।

२. सर्व इमे बाढमधीयते, अयमेषामतिशयेन बाढमधीते, साधिष्ठम् । उभाविमौ बाढमधीयाते, अयमनयोरतिशयेन बाढमधीते, साधीयः । अयमस्मात् साधीयोऽधीते (५.३.६३) ।

३. अयमनयोः साधीयोऽधीते । अयमेषां साधिष्ठमधीते ।

४. बाढस्य साधोऽन्तिकस्य नेदः, इष्ठेयन्सोः परतः । अयमेषां बाढमधीते साधिष्ठमधीते । बाढशब्दः क्रियाविशेषणमेवेति प्रत्ययान्ता अपि तथा ॥ १४१८ ।

५. साधीयानतिबाढे स्यादतिसाधौ तु वाच्यवत् (मेदिनी० १७४ पृ०) ।

६. बाढतमः साधिष्ठः, साधीयान्—(प्रक्रियासर्वस्वम्) ।

प्रादर्शि[1]। ततः परमपरः 'सही'-शब्दः समासाद्यत ऋज्वर्थको यो वस्तुतः पारस्यभाषामयः[2]। [ एतदीयं विशुद्धं रूपं 'सिही' इति ]। एवं सत्यपि हिन्दीभाषायाम् उर्दूभाषायां च व्यवह्रियमाणस्योपर्युक्तार्थस्य 'सही'-शब्दस्य पारस्यमयेनानेन 'सही'-शब्देन न कोऽपि संबन्धः।

फेलनमहाशयेनोक्तार्थेषु 'सही'-शब्दः √अस् धातोर्व्युत्पादितः। श्रीरामचन्द्रवर्ममहाशयेन त्वव्ययार्थकः क्रियाविशेषणार्थकश्च 'सही'-शब्दः ( २००६ वैक्रमे वत्सरे ) हिन्द्याः 'सहना'-धातुतो व्युत्पादितः[1]। एवं सत्यप्यसौ शब्दस्यास्य सिद्धिं √स्थाधातुतः, स्थित-स्थितिशब्दाभ्यां च व्युत्पादयितुमैहिष्ट; अर्थसाम्यदर्शनात्[3]। इतो मासषट्के स एव महाशयोऽलेखीत्—"सही-शब्दस्यैवञ्जातीयकाः प्रयोगा भारते बहोः कालाद् एतावच्चिरं सन्ति प्रचलिता इति मामकीनो दृढो विश्वासः। तदीया व्युत्पत्तिरपि भवेत् स्वतन्त्रा। भवतु नाम, विषयोऽयं सुधियां विवेचनीयतामर्हति[4]" इति तेन महाशयेन स्वकल्पितासु व्युत्पत्तिष्वसन्तोषो दर्शितः।

वस्तुतो हिन्दीभाषामयः 'सही'-शब्दः कामपि परम्परामावहति क्रियाविशेषणः। एष पाणिनिनिर्दिष्टः पतञ्जलिप्रयुक्तश्च 'साधीयः'-शब्दः क्रियाविशेषणस्तन्मूलकः साधीयः > साहीय > साही > 'सही' इति। प्राकृतादि-

---

१. कोशकला, १०२ पृ०।

२. सही Erect ( cypress ); fresh, young ( Persian English Dictionary, Pages 712. )

३. कोशकला, १०२ पृ०।

४. फिर भी 'सही' के कुछ प्रयोगों के सम्बन्ध में एक विकट प्रश्न रह ही जाता है। हम कहते हैं—आप तो वहाँ जाने से इनकार ही करते थे, फिर भी आप वहाँ गये सही। 'सही' के कुछ इसी प्रकार के प्रयोग हमारे यहाँ के मध्ययुगीन साहित्य में मिलते हैं। यथा—

( क ) प्रभु आसुतोष कृपाल सिव अबला निरखि बोले सही॥ तुलसीदासः।

( ख ) परसत पदपावन सोक नसावन प्रगट भई तपपुंज सही॥

—तुलसीदासः।

ऐसे अवसरों पर 'सही' का प्रयोग हिन्दी के 'ही' अव्यय की तरह किसी बात पर जोर देने के लिए ही होता है। आशय यही होता है कि कही बात अवश्य और निश्चित रूप से घटित हुई। ऐसी अवस्था में इसका सम्बन्ध अरबी वाले विशेषण 'सही' से स्थापित करना कुछ अधिक तर्कसंगत

भाषासु 'साधु' इत्यत्रत्यधकारस्य हकारत्वेन परिणामः सुप्रतिष्ठः[1] । हिन्दी-भाषायामद्यापि वैश्यार्थकौ 'साव' < 'साहू' [ <साधु– ]-शब्दौ सुप्रथितावेव । महाभाष्यकारेण भगवता पतञ्जलिना कृतः क्रियाविशेषणस्यैव साधीयः-शब्दस्य प्रयोगः, काशिकादिप्राचीनासु वृत्तिषु च तद्व्याख्यानम्, मध्यकालिक्यां हिन्दीभाषायां च तत्परम्परासंरक्षणम्, अद्यापि च तद्व्यवहार इत्यादीनि शब्दैतिह्यविदां महते मनस्तोषाय कल्पेरन् । हिन्दीभाषामये 'सही-शब्देऽनुमतात्यर्थसत्तमशोभनार्थाः[2] सर्वेऽप्यनुगताः कालक्रमेण ।

भारतीयपरम्परावत् साधीयः-शब्दस्य क्रियाविशेषणस्य प्रयोगसंरक्षा पारस्यादिभाषासु सुविहिता न वेति न पार्यते वक्तुम्; अवेस्ताभाषायाम् इष्ठान्तप्रयोगस्यैव हाइदिश्त[3] ( <साधिष्ठ-)-शब्दस्य दर्शनात् ।

निष्कर्षतो निपातनस्य बाढशब्दस्य सिद्धौ वैयाकरणा भानुजिदीक्षितादयोऽनिश्चितमतयः । वृद्ध > वड्ढ > वड्ढ > वाढ > 'बाढ'-इत्येवञ्जातीयकोऽयं शब्दः पूर्वं विशेषणत्वेन प्रयुक्तः, वृद्धशब्दस्य तथा प्रयोगात् (द्र० टिप्पणीष्वृग्वेदीयानि पालिभाषामयानि चोदाहरणानि ) । *निस्द्; *निज्द्=नि+√सद्—नीड; *पिज्द्, पिस्द्=अपि+√सद्,-√पीड्; *वस्द्=अव+√सद्-√वाड् इतिवत् *वस्ध्, वज्द्=अव+√साध्—वाढ् इति कल्पने न किमपि मानम् ऐतिह्यं च । भृशार्थको वर्धापनार्थकश्च बाढशब्दो दृढार्थकोऽनुमत्यर्थश्च संपन्नः, उपनिषद्वाल्मीकीयरामायणमहाभारतादिषु च क्रियाविशेषणत्वेनाव्ययत्वेन वा प्रयुक्तः[4] । महाभाष्यकृता तु सर्वत्रैव क्रियाविशेषणत्वेनास्य

---

नहीं जान पड़ता । मेरा ऐसा विश्वास है कि 'सही' के इस प्रकार के प्रयोग हमारे यहाँ बहुत पहले से चले आ रहे हैं और उनकी व्युत्पत्ति भी कुछ स्वतन्त्र होनी चाहिए । जो हो, यह विषय विद्वानों के लिए विचारणीय है । ( श्रीरामचन्द्रवर्मा : 'आज' साप्ताहिक विशेषाङ्क, १० पृ०, १३ मार्च, १९६६ ई० ) ।

१. साहु रे कण्णऊरअ ! साहु (>साधु रे कर्णपूरक ! साधु )—मृच्छक० १६१ पृ० [ चौ० सं० ] ।

२. साधीयोऽनुमतेऽत्यर्थं सत्तमे शोभनेऽपि च ।
—वैजयन्तीकोशे त्र्यक्षरकाण्डेऽर्थवल्लिङ्गाध्यायः ।

३. Christian Bartholomæ: Altiranisches Wörterbuch, Pages 1802.

४. नारदपरिव्राजकोपनिषद् २ ।

प्रयोगोऽनुष्ठितः[1]। एतदादेशोऽपि 'साधीयः' इतीयस्-विशिष्टस्तथैव प्रतिज्ञातस्तथ्यविद्भिर्वैयाकरणैः; प्रयुक्तश्च लक्ष्यैकचक्षुष्कैः। 'साधीयः'-शब्दे खलु पाणिन्युक्तभृशार्थातिरिक्ता अनुमतसत्तमशोभनार्था अप्यनुगताः। अपरत्र साधुशब्दः क्रियाविशेषणवचनो[2] विशेषणवचनश्च। एतस्य क्रियाविशेषणतामभिलक्ष्य पाणिनिना बाढशब्दादेशोऽयं साधु संपादितः। विशेषणवचनात् साधुशब्दाद् ईयसुनि त्रिषु लिङ्गेषु प्रयोगः साधीयान्। महामुनिना पाणिनिना निपुणार्थकोऽपि साधुशब्दो निर्दिष्टः[3] साधकार्थकोऽपि[4]।

समष्टितस्तुलनात्मकम् ऐतिहासिकं समालोचनात्मकं च व्याकरणमन्तरा शब्दसाधनं कल्पनामात्रम्। पाणिनीयैर्वैयाकरणैरत्र दिश्यनिवार्यतया पदं विधानीयम्। एषा पूर्णाहुतिः शब्दशास्त्रस्येत्यलम्॥



---

१. बाढमर्थः—१.२.३०;१.२.६४।
२. ऋतस्य पन्थामन्वेति साधु प्रजानतीव दिशो मिनाति—ऋ० १.१२४.३; ५.८०.४=सम्यक् [ सायणः ]।
एकं क्रतुमभि वि यन्ति साधु—ऋ० ६.६.५=सम्यक् [ सायणः ]।
यज्ञं नय यजमानाय साधु—ऋ० ६.१५.१६ = आर्जवेन [ सायणः ]।
साधु कृण्वन्तमवसे—ऋ० ८.३२.१०।
ऋतव ऋतुभिर्यन्ति साधु—ऋ० १०.१८.५ = शोभनमविपर्यासेन [सायणः]।
शाहु, अज्जचालुदत्त! शाहु ( <साधु आर्यचारुदत्त! साधु )—मृच्छक० १३० पृ० [ चौ० सं० ]।
साधु मुच्येयम्—पादताडितकम् ( चतुर्भाणी, २०१ पृ० )।
साधु सा पुंश्चली—पद्मप्राभृतकम् ( चतुर्भाणी, १६ पृ० )।
३. 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः'—२.३.४३; 'तत्र साधुः'—४.४.९८'
४. कालात् साधुपुष्यत्पच्यमानेषु—४.३.४३।

# नूतनम्

सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च (४।३।२३) इति पाणिनीयं सूत्रम्। तदर्थः—सायमित्यादिभ्यश्चतुर्भ्यः, **अव्ययेभ्यश्च कालवाचिभ्यः** ट्युट्युलौ स्तस्तयोस्तुट् चेति। दोषातनम्, दिवातनम् इत्यत्र काल-वाचकाव्ययात् प्रत्ययः।

'नु' इत्यव्ययम्। एतस्य लभ्यन्ते चत्वारोऽर्थाः—१—क्षिप्रम्,[1] २—नूनम्[2] ३—नवम्[3] (प्रथमं वा), ४—अद्येति[4]। अवेस्ता-ग्रीक-गाथिक-पु० आइस्लैं०-पु० उ० ज०-ऐंग्लो-सैक्सन्-लिथुआनियन्-लेट्टिश्-म० उ० जर्मन्-भाषासु 'नून' (नु)शब्दः सम्प्रत्यर्थकः[5]। क्षिप्रम्, नवम्, नूनम् अद्येति सर्वे प्रायः समानार्थाः। पूर्वे त्रयः शब्दाः 'अद्य' इति शब्दार्थमनुधावन्ति। यत् क्षिप्रमनुष्ठीयते तद् अद्य भवति नातः प्राक्। यन्नवं भवति तद् अद्य। इतः

---

१. नू नो रास्व—ऋ० ३,१३,७—नु = क्षिप्रमविलम्बेन [ सायणः ]।
नू न एहि—ऋ० ५,१७,५—नु = क्षिप्रम् [ सायणः ]।
नू इत्था ते पूर्वथा च प्रवाच्यम्—ऋ० १,१३२,४—नु=क्षिप्रम् [सायणः]।
नवं नु स्तोममग्नये—ऋ० ७,१५,४—नु=क्षिप्रम् [ सायणः ]।
नू म आ वाचमुपयाहि—ऋ० ६,२१,११—नु=क्षिप्रम् [ ,, ]।
अभूद् देवः सविता वन्द्यो नु—ऋ० ४,५४,१—नु=क्षिप्रमेव [ ,, ]।

२. न यस्य वर्ता जनुषा न्वस्ति—ऋ० ४,२०,७—नु=नूनम् [ सायणः ]।

३. श्येनस्य चिज्जवसा नूतनेना गच्छतम्—ऋ० ५,७८,४—नूतनेन=प्रथमोत्पन्नेन [ सायणः ]।
विश्वाषाहमवसे नूतनाय—ऋ० ३,४७,५—नूतनाय=नवतराय। 'नवशब्दस्य 'नू' इत्यादेशः, त्नप्तनखाश्च प्रत्यया वक्तव्याः' इति तनप्रत्ययः [ सायणः ]।
वोध्यापिरवसो नूतनस्य—ऋ० ३,५१,६—नूतनस्य=नवतरस्य [ सायणः ]।
आ श्येनस्य जवसा नूतनेन—ऋ० १,११८,११-नूतनेन=नवतरेण [सायणः]।
कस्तद् बिभर्ति नूतनः—ऋ० १,१०५,४—नूतनः=नवतरः [ सायणः ]।

४. नू मे हवमा शृणुतं युवाना—ऋ० ७,६७,१०—नु=अद्य [ सायणः ]।
नू मित्रो वरुणो अर्यमा—ऋ० ७,६२,६—नु=अद्य [ सायणः ]।

५. Alois Walde : Vergleichendes Wörterbuch ( II Band ), P. 340.

पूर्वो दिवसो न तथा। यच्च निश्चयेन प्रतिश्रूयते तद् अद्य=इदानीम्; भविष्यति को विश्वासः। एवं समे शब्दा अद्यशब्दार्थकास्तदर्थमेवाभिदधते।

अद्यार्थको नुशब्दः कालाव्ययवाचीति सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च (४।३।२३) इति पाणिनीयसूत्रप्रवृत्तिर्निश्चिता। तेन 'नूतन'-शब्दः सिद्ध्यति। तदर्थश्च जायते 'अधुनातन-' इति। 'अधुनातन-' इत्यर्थकः 'आधुनिक-'='नवीन-' इति। मन्ये, एवमेवाभ्युपगम्य महर्षिपाणिनिना 'नूतन'-शब्द-सिद्ध्यर्थं पार्थक्येन न प्रणीतं किमपि सूत्रम्।

अधुनातनेऽर्थे नूतनशब्द ऋग्वेदेऽनेकत्र प्रयुक्तो दृश्यते। तद् यथा—

पूर्व्या महान्युत नूतना कृतानि—ऋ० २,११,६।

—नूतना:=अधुनातनानि [ सायणः ]।

मध्यभिरुत नूतनेभिः—ऋ० ३,३२,१३।

—नूतनेभिः=अधुनातनैः [ सायणः ]।

यः पूर्व्याभिरुत नूतनाभिर्गीर्भिः—ऋ० ६,४४,१३।

= इदानीं क्रियमाणाभिः [ सायणः ]।

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत—ऋ० १,१,२।

—नूतनैः = इदानीन्तनैः [ सायणः ]।

यो मध्यमास उत नूतनासः—ऋ० ६,२१,५।

—नूतनासः = अद्यतनाः [ सायणः ]।

न पुराणो मघवन्नोत नूतनः—ऋ० १०,४३,५।

—नूतनः=वर्तमानकालीनः [ सायणः ]।

भगवता पतञ्जलिना 'लोहितान्मणौ' ५।४।३० इत्यत्र कात्यायनवार्त्तिकं समुदलेखि—*नवस्य नू त्नप्-तनप्-खाश्च*। अस्य व्याख्या चेत्थं कृता—'नवस्य 'नू' इत्ययमादेशो वक्तव्यस्त्नप्-तनप्-खाश्च प्रत्यया वक्तव्याः' इति। भानुजिदीक्षितो नामलिङ्गानुशासनटीकायां √नू धातुतः ( ३।३।५७ ) अप्प्रत्यये कृते सति नवशब्दं व्युत्पादयति। वस्तुतः 'नव'-शब्दो वैदिक-'नु' [ नू ]-शब्दतो व्युत्पद्यते। भारोपीयभाषासु 'नु' [ नू ]-शब्दोऽधुनाऽर्थे सर्वत्र प्रतिष्ठित इति मया प्राक् प्रदर्शितम्। तत एव विकासमाप 'नव'-शब्दः, इँग्लिशभाषाया Now ( नॅव ) शब्दवत्। इँग्लिशभाषायां Now शब्दस्यार्थो मूलार्थवत् सुरक्षितः किन्तु संस्कृतभाषायां सम्प्रतीत्यर्थं विहाय प्रत्यग्रार्थमेवाग्रहीत्।

वार्त्तिककारेण खल्वभिनवतरार्थके नूतनशब्दे 'नू' इत्यस्य 'नव'-शब्दाद् व्युत्पत्तिराकल्पिता। तदानीं नूतनशब्दस्य 'अधुनातन-' इत्यर्थो लुप्तः स्याल्लोके।

नवशब्दार्थान्नूतनशब्दार्थे कमपि भेदमनवलोक्य 'तनप्-प्रत्ययो विहितः स्वार्थे। अतो नव एव नूतन इति विग्रहः क्रियते वैयाकरणैः। तत्र 'तन'-प्रत्ययस्य कोऽप्यर्थो नाभिधीयते।

सायणेन तु तत्र तत्रर्ग्वेदे नवार्थकनूतनशब्दव्याख्यानं कुर्वाणेन 'तन'-प्रत्ययस्य तरवर्थो विहितः[1]। अथर्ववेदे तैत्तिरीयसंहितायां च 'अभि'[2] इत्युपसर्गयोजनामन्तरा नान्योऽर्थः कश्चन दर्शितः।

अयं 'तन-' (तुट्-ट्यु)-प्रत्ययः सुस्पष्टं संबन्धद्योतकः। अतो नूनमेष तनु-=देह-वाचकः। देहश्च संबन्धवाचकः। 'सायंतनं कार्यम्' इत्यस्यार्थः—सायंदेहकं कार्यम्, सायंसंबन्धिकार्यम् इति। श्रीमता नागेशभट्टेनापि 'पश्चात् तन्वन्तीति—पश्चात्तनाः'[3] इत्यत्र विस्तारार्थकात्=√तन् धातोर्व्युत्पत्तिः साधिता। एष प्रत्ययो यूरोपीयभाषासु मनाक् परिवर्तितो लभ्यते। तद् यथा—ग्रीकभाषायां 'तनोस्', लैटिनभाषायां 'तिनुस्' 'तेर्नुस्', लिथुआनियनभाषायां च 'तिनस्' इति[4]। पुरातनपर्सियन्भाषायामयं 'तर्न'-रूपेणोपलभ्यते—'दुवितातर्नम्' इति[5]।

इतो भिन्नोऽपि तनप्रत्ययो लभ्यते संस्कृतभाषायाम्—'वीपतिभ्यां तनन्' (उ० ३।१५० )—वेतनम्, पत्तनम् इति।

—: ० :—

---

१. विश्वसाहमवसे नूतनाय—ऋ० ३,४७,५=नवतराय [ सायणः ]।
वोध्यापिरवसो नूतनस्य—ऋ० ३,५१,६ = नवतरस्य [ सायणः ]।
आ श्येनस्य जवसा नूतनेन—ऋ० १,११८,११=नवतरेण [ सायणः ]।
कस्तद् बिभर्ति नूतनः—ऋ० १,१०५,४=नवतरः [ सायणः ]।
तुलनीयो गाथि० आफ्तन=पश्चात् (तन-) [ तथा इं० आफ्टर=पश्चात् (तन-) ] इति।

२. स पूर्व्यो नूतनमाविवासत—अ. वे. ७,२२,१=पुनः पुनरुदयेनाभिनवम् [ सायणः ]।
कोतनासु नूतनासु—तैसं० ३,३,३,१=अभिनवासु [ सायणः ]।

३. बृहच्छब्देन्दुशेखरः, १३२६ पृ०।

४. altindische Grammatik, II 2, P. 594.

५. Fr. Spiegel : vergleichende Grammatik der altiranischen Sprachen, Pages 205.

# छात्त्रः

'छत्त्रादिभ्यो णः' ४.४.६२ इति पाणिनीयं सूत्रम् । संहितासु ब्राह्मणारण्यके च नोपलभ्यते छत्त्रशब्दस्तत्पर्यायवाचको वा शब्दः । शिवोपनिषदि सीतोपनिषदि सूत्रग्रन्थेषु चास्य प्रथमतः समधिगमः[१] । ऋग्वेद उपर्यपिधानार्थकश्छदिशब्दः[२] ।

महाभारते छत्त्रप्रचारकथा लभ्यते । छत्त्रोपानहं सूर्येण[३] क्रुद्धाय जमदग्नये प्रदत्तम् । तदीया पत्नी रेणुका निदाघप्रपीडितेति सूर्याय क्रुध्यति स्म जमदग्निः[४] । महाभारतकथा वस्तुद्वयं निर्दिशति—आतपात् त्राणाय छत्त्राविष्कार इति कोमलाङ्गीनां नारीणां हितकाम्या चेति । आतपत्त्रशब्दोऽप्येवमेव दर्शयति । वृष्टित्रेति वर्षात्रेति वा नास्ति शब्दः । रोमदेशेऽपि सूर्यातपात् त्राणाय छत्त्रोपयोगो महिलाभिः स्त्रैणपुरुषैर्वा विधीयते स्म । ग्रीसदेशे तूच्चकुलसंभूताभिर्महिलाभिरिदमुपयुज्यते स्म[५] ।

---

१. छत्त्रम्—शिवोपनि० ६,२१६;७,४६; आपश्रौ० १५,२०,१७; बौश्रौ० ६,१९ : ४२;१७,३९;६;४२ : ९; छत्त्रेण=सीतोपनि० ३७ ।

२. द्यौरासीदुतच्छदिः—ऋ० १०,८५,१०=उपर्यपिधानम् [ सायणः ] ।

३. तुल० जापानीयभाषायाम् उद्यत्सूर्यवाचकः 'छोतान्' इति शब्दः
—New Japanese English Dictionary.

४. अथ सूर्योऽददत् तस्मै छत्त्रोपानहमाशु वै ॥

सूर्य उवाच—

महर्षे शिरसस्त्राणं छत्त्रं मद्रश्मिवारणम् ।
प्रतिगृह्णीष्व पद्भ्यां च त्राणार्थं चर्मपादुके ॥
अद्यप्रभृति चैवेह लोके संप्रचरिष्यति ।
पुण्यकेषु च सर्वेषु परमक्षय्यमेव च ॥

भीष्म उवाच—

छत्त्रोपानहमेतत् तु सूर्येणैतत् प्रवर्तितम् ।
पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत ॥
—महाभारतम् १३,९६,१३—१५ ।

५. In Greece they were used by ladies of position, and the Greek poets have reference thereto. In Rome wo-

लातिनभाषायां कस्त्रुम् ( Castrum ) इति शब्दः पटोटजवाचकः कुल्यावाचकश्च। एवमेव तत्र कस्तेल्लुम् ( Castellum ) इति शब्दोऽप्यवधेयः। म० आयरिश्भाषायां कैसेल्, किम्रिकभाषायां कैस्तिल्, कस्त्रुवुफ्, कस्त्रुओ ( द्वितीयाबहुवचने ), कस्त्रुग्रोस् ( षष्ठ्याम् )। जर्मनभाषायां 'कपुत्' इति शब्दः सैनिकांसकूटार्थक उष्णीषिकार्थकश्च। ऍलायस्-वाल्देमहाशयो लातिनभाषामयस्य 'कस्त्रुम्' इति शब्दस्य व्युत्पत्तिं प्रादर्शयत्--*कपुत्—त्रोम् ! ! इति[१]।

छत्त्रं पटोटजम् इत्यनर्थान्तरम्। रूमानियनभाषायां शत्रा ( śatră ) शब्दः पटोटजवाचकः। एवमेव लिथुआनियन्—शेत्र ( śétra ), चर्चस्लावोनिक—कंश्त, सेर्बोक्रोटियन्—शतोर् ( śator ), पॉलिश्—स्सातेर्, रसन्—शतेर् ( śater ) इति। कार्लडार्लिङ्गबकमहाशयानुसारेण त्विमे शब्दास्तुर्किशभाषायाः 'शादिर्' ( cadir ) इति शब्दमूलकाः। नवीनपर्सियन्भाषायां चादर् ( cādar ) इति शब्दोऽपि पटोटजाभिधायकः[२]। एभिस्तुलनीयश्छत्त्रशब्दः। छत्त्राकारगृहनिर्माणान्नगरीणां नामधेयमपि छत्त्रवतीति छत्त्रेति संवृत्तम्[३]। किम्रिकभाषायां नगरवाचकं कइर्, कएर् इति शब्दद्वयम्। मध्यब्रेटानिकभाषायां कएर्, नवब्रेटानिकभाषायां केअर्, कार्निश्भाषायां कएर् इत्यपि सर्वे शब्दा नगरार्थकाः। इह पुरातन-आयरिश्भाषायाः 'कथिर्' इति शब्दः सुतुलामाधत्ते छत्त्रस्य[४]।

---

men and effeminate men used them as a protection from the sun's heat.

—The Encyclopædia Americana ( umbrella word )

१. Alois Walde :—Lateinisches Etymologisches Wörterbuch, Pages 131.

२. Carl Darling Buck : A Dictionary of Selected Synonyms in the Principal Indo-European Languages, Pages 461.

३. पार्षतो द्रुपदो नामच्छत्त्रवत्या नरेश्वरः ॥

—मभार० १,१६६,२१।

छत्ता—आवम० ( पाइअसद्दमहण्णवो )।

४. eine ernste Schwierigkeit böten air. Cathir, cymr. Cair, caer, mbret. Caer, nbret. Kear, Corn. Caer „ Stadt."

—Alois Walde : Lateinisches Etymologisches Wörterbuch, Pages 139.

पाणिनिना 'छत्त्रादिभ्यो णः' ४.४.६२ इत्यत्र 'छत्त्रं शीलमस्य' इत्यर्थे णप्रत्ययो विहितः। महाभाष्ये 'गुरुश्छत्त्रम्। गुरुणा शिष्यश्छत्त्रवच्छाद्यः, शिष्येण च गुरुश्छत्त्रवत् परिपाल्यः[1]।' 'गृहिणी गृहमुच्यते' इतिवत् छत्त्रं तु गुरुरुच्यते। छत्त्रं गुरुस्थानमित्यर्थः। तत्र छत्त्रेऽवहितस्तच्छिद्रादिवारणप्रवृत्तश्छात्त्र उच्यते। काशिकादिषु तु 'गुरुकार्येष्ववहितस्तच्छिद्रवारणप्रवृत्तश्छत्त्रशीलः शिष्यश्छात्त्रः[2]' इति छात्त्रपरिभाषायां 'छिद्रवारणप्रवृत्त-' पदग्रहणं शिक्षकाणां पतनं सूचयति, भाष्ये त्वस्य लेशोऽपि न विद्यत इति काशिकाकारकाले सप्तमशताब्द्यां शिक्षकप्रमादाः सुतरां सिद्ध्यन्ति। महाभारतानुसारेण तु—अवलिप्तस्य कार्याकार्यमजानत उत्पथप्रतिपन्नस्य च गुरोरपि दण्डो न्याय्यो मत[3] इति छात्त्रशब्दस्य तादृशी व्याख्या तादृशगुरुप्रकल्पितैव विज्ञेया। सप्तमशताब्दीतस्ततो वा प्रागवलिप्तानां गुरूणां प्राचुर्यात् तादृशी व्याख्या नैसर्गिकीत्यैतिह्यम् अग्रेसारयति सा।

महाभाष्यकारो भगवान् पतञ्जलिस्तु छात्त्रशब्दस्य तथ्यमुपस्थापयति—'किं यस्य च्छत्त्रधारणं शीलं स छात्त्रः। किं चातः। राजपुरुषे[4] प्राप्नोति' इति। वस्तुतस्तु छत्त्रधारणशीलश्छात्त्रः। राजपुरुषे[5]ऽतिव्याप्तिरिति

---

१. छत्त्रमिव च्छत्त्रम्। गुरुश्छत्त्रम्। गुरुणा शिष्यश्छत्त्रवच्छाद्यः। शिष्येण च गुरुश्छत्त्रवत् परिपाल्यः। —महाभाष्यम् ४.४.६२।
= गुरुविषयं पालनं शीलमस्येत्यर्थः (प्रदीपः)।

२. छत्त्रं शीलमस्य छात्त्रः। छादनावरणाच्छत्त्रम्। गुरुकार्येष्ववहितस्तच्छिद्रवारणप्रवृत्तश्छत्त्रशीलः शिष्यश्छात्त्रः।
—काशिका ४.४.६२।

३. गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम्॥
—मभार० १,१३४,५४।

४. 'यः पुरुषो राज्ञश्छत्त्रं धारयति स छात्त्रशब्दाभिधेयः स्यादित्यर्थः' इति तत्र कैयटः।

५. छाते, s. the servant who carries an umbrella (employed by noble families) [der. छाता].
—A Comparative & Etymological Dictionary of the Nepali Language.

धियैव 'गुरुणा शिष्यश्छत्त्रवच्छाद्यः शिष्येण च गुरुश्छत्त्रवत् परिपाल्यः' इति व्याख्यान्तरम्। चान्द्रव्याकरणे तु 'छात्त्रः—छत्त्रमिव गुरोः सुखहेतुरित्यर्थः'[१]। कैयटस्तु महाभाष्यकाराशयमनवबुध्य ततोऽप्यग्रे व्यतानीत्—'अज्ञानं शिष्यस्य छादयति = निवर्तयति यतस्तत्र छत्त्रं शीलमस्य' इति। नागेशोऽपि तट्टीकायाम् - 'यथा छत्त्रमुष्णादि निवर्तयत्येवमज्ञानं गुरुर्निवर्तयति' इति गौणीवृत्त्याः सम्यक् परिपालनं विदधाति।

प्रक्रियासर्वस्वकारो नारायणभट्टस्तु पतञ्जलिनिर्देशं समवगच्छंस्तत्सूत्रव्याख्यानपरः प्रतिपादयति—'छत्त्रेण तद्धारणादिगुरुसेवात्र लक्ष्यते। तस्माद् 'गुरूपासनशीलश्छात्त्रः' इति। अहरहः समिदाधानं भैक्षाचरणमधःशय्या गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि। तत्र गुरुशुश्रूषायां छत्त्रसमर्पणम्[२]। समावर्तमानोऽपि स उपकल्पनीयेषु वस्तुषु च्छत्त्रमवश्यं गुरवे प्रयच्छेत्[३]। दर्शपौर्णमासविधौ प्रत्याव्रजनकाल उत्तरासङ्गोदकमण्डलुदर्भवटुभिः सत्रा छत्त्रस्यापि ब्रह्मासने स्थापनमावश्यकम्[४]।

ननु गुरुशुश्रूषायां क्षेत्र-हिरण्य-गो-वसन-छत्त्रोपानह-धान्यान्न-शाकानामुल्लेख इति कथं छत्त्रधारणशील एव च्छात्त्रः? क्षेत्रहिरण्यादीनां गुरोः शिरसि च्छत्त्रवद्धारणेन गुरुसेवाभावात्। छत्त्रदण्डस्य च तदानीं सुलम्बत्वेन[५]

---

१. छत्त्रादिभ्यो णः—४.४.६३—चान्द्रव्याकरणम्।

२. अहरहः समिदाधानं भैक्षाचरणमधःशय्या गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि ॥ १८। तदपि श्लोकः—

क्षेत्रं हिरण्यं गां वासश्छत्त्रोपानहमन्ततः।
धान्यमन्नमथो शाकं गुरवे प्रीतिमावहेत् ॥ १९।

—कौषीतकिगृह्यसूत्रम् २,३,१८—१९।

३. अथैतान्युपकल्पयेत समावर्तमानो मणी कुण्डले वस्त्रयुगं छत्त्रमुपानद्युगं दण्डं स्रगुन्मर्दनमनुलेपनमञ्जनमुष्णीषमित्यात्मने चाचार्याय च।

—आश्वलायनगृह्यसूत्रम् ३,७,१।

४. यद्यु वा उभयं चिकीर्षेद्धौत्रं चैव ब्रह्मत्वं चैवैतेनैव कल्पेन छत्त्रं वोत्तरासङ्गं वोदकमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्याव्रज्यान्यच्चेष्टेत

—गोभिलगृह्यसूत्रम् १,६,२१।

५. विशेषश्चाथ सामान्यं छत्त्रस्य द्विविधा भिदा।
राज्ञश्छत्त्रं विशेषाख्यं सामान्यं चान्यदुच्यते ॥

स्वयं तद्धारणक्लेशात्[1]।

सत्स्वप्येतेषु सर्वेषूद्धरणेषु 'छत्रधारणादेव च्छात्रः' इति नेदं प्रत्यक्षतः प्रमाणपरिपुष्टम्। छत्रं द्विविधं भवति स्म— राज्ञो विशेषाख्यमन्यच्च सामान्यम्। तत्रापि सदण्डता निर्दण्डता च। कालिदासीयं पद्यं सदण्डस्य च्छत्रस्य प्रस्तौति वर्णनम् इति दशहस्तलम्बदण्डस्य च्छत्रस्य स्वतो धारणं क्लेशायैव। यदि कृतत्रेताद्वापरकलियुगभेदेनापि दशाष्टषट्चतुर्हस्तदीर्घता निर्णीयेत दण्डस्य ततोऽपि शैक्षा विद्याप्रारिप्सवश्छात्राः पाणिनिकाले चतुर्हस्तमितदण्डं वोढुं सुतमामसमर्थाः। सूर्यप्रदत्तच्छत्रस्य निर्दण्डत्वं सदण्डत्वं वेत्यसुस्पष्टत्वेऽपि तद्दत्तच्छत्रस्य लघुत्वं रेणुकाया धावनसौकर्याद् ज्ञायत इति निर्दण्डत्वमेव भवेत् तस्य। अथापि छत्रं शीलम् = स्वभावो[2]ऽस्येति शीलशब्दस्य स्वभावोऽर्थ इति तादृशा वटवः स्वभावतस्तादृशं छत्रं धारयितुं कच्चित् प्रभवः ? आकुञ्च्य वहने नोद्देश्यसिद्धिः, कार्यकाले शिष्यस्य गुरुप्रसारितच्छत्रच्छायामास्थितस्य सेवाभावात्, नियमविरोधाच्च (आपश्रौ० १५,२०,१७)। आसां सर्वासामसङ्गतीनां कारणेन महाभाष्यकारस्य तथा व्याख्यानम्। मॉनियरविलियम्स्-इत्यादयस्त्विदं सर्वमपर्यालोच्य छत्रधारणाच्छात्रः (who carries umbrella) इति व्याख्यान्ति[3]।

---

सदण्डं चाथ निर्दण्डं तज्ज्ञेयं द्विविधं पुनः।
सदण्डं तत्र विज्ञेयं सारणाकुञ्चनात्मकम्॥
दण्डः कन्दः शलाकाश्च रज्जुर्वस्त्रं च कीलकः।
षड्भिरेतैः सुसंदिष्टैश्छत्रमित्यधीयते॥
दिगष्टषट्चतुर्हस्तदीर्घो दण्डो युगक्रमात्।
षड्बाणवेदनयनवितस्त्या कन्द उच्यते॥

—भोजराजकृतो युक्तिकल्पतरुः (श० क० द्रु०)।

१. नातिश्रमापनयनाय यथाश्रमाय।
राज्यं स्वहस्तधृतदण्डमिवातपत्रम्॥

—अभिज्ञानशाकु० ५,६।

२. शीलम्=स्वभावः—बृहच्छब्देन्दुशेखरः, १३८४ पृ०।

३. छात्र, m. (as carrying his teacher's umbrella or as concealing his faults ?).

—Monier Williams : Sanskrit English Dictionary.

छत्त—One who carries his master's sunshade.

—P. T. S. Pali English Dictionary.

इह तावद् द्वापरत्वे काल्डवेलमहाशयस्य नियमोऽनुगमनीयः। तत्र नियमस्य चतुर्थे विभागे तेनेत्थं स्थिरीकृतम्—'संस्कृतकोशकाराः कस्यचन शब्दस्य व्युत्पत्तिं प्रत्यक्षतः काल्पनिकेन केनचिच्छब्देनाभिसंबध्नन्ति। द्राविडाः कोशकारास्तु कस्माच्चन स्वाभाविकात् (स्थानीयात्) तस्माद् धातुप्रकरणाद् निर्णयन्ति व्युत्पत्तिं यस्मादन्येऽपि समानार्थकाः शब्दाः स्युः साध्यव्युत्पत्तयः'[1] (विस्तृतनियमास्तत्रैव विलोक्याः)। एवं तद्दर्शितनियमषट्के कोपि नियमः संगच्छेत चेत् तर्हि तादृशः शब्दो न संस्कृतव्युत्पत्तिकः। अस्माभिस्तु निष्पक्षपातदृशा परीक्षणीयम्—

इयच्चिरं नैकमताः सर्वे छात्त्रशब्दव्युत्पत्तिविषय इति भाति काल्पनिकव्युत्पत्तिमच्छब्दोऽयम्।

मुण्डारीभाषायां 'चातोम्'-शब्दो वेणुनिर्मितच्छत्त्रवाचकः[2]। चट[3],

---

१. R. Caldwell : A Comparative Grammar of the Dravidian, Pages 439.

२. चातोम्—A bamboo-umbrella.

—Mundari-English Dictionary.

चटाई (पंजाबी) 'mattnig'; चटाइ (नेपाली); चटा (बँगला) 'bamboo lath' चटाइ, 'bamboo matting', चट, चटाई (उड़िया) 'matting'

—A Comparative Dictionary of the Indo-Aryan Languages.

चटाई— Licking, a mat made of grass, rushes palm leaves cocoanut fibre, sugar-cane stalk or other materials.

—The Panjabi Dictionary.

३. चट—An image of दर्भ—grass at श्राद्ध when the required ब्राह्मण is not present; to represent him and to receive the homage due to him. [तु० दर्भचटुम्—गोभिलगृ० ३,६,११ (पीटर्सबर्गकोशः)].

—J. T. Molesworth : A Dictionary, Marathi & English.

चट्टी[1], छटी[2], चटई[3], चटाइ[4], चटाई[4], चटा[4], चाटका[5], चट्टू[6], चाटु[7] चाटसी[7]-प्रभृतयः शब्दा वेणुखर्जूरादितृणवाचकास्तन्निर्मितवस्तुकुटीरादि-वाचकाश्च सन्ति। मुण्डारीभाषायामेव घटवाचकश्चाटुशब्दः। छत्रं वेणु-निर्मितं दारुनिर्मितं वा भवति स्म[8]। चीनदेशे[9] श्याम(थाइलैण्ड)-देशे चाद्यापि छत्रं वेण्वादिनिर्मितं भवति। उपरि वस्त्रस्थाने तत्र तैलकिट्टकर्गजप्रयोगः। यथा कुटीषु मुन्यादीनां निवासस्तथा छत्रेष्वपि[10]मुनयो निवसन्ति स्मेति

---

१. चट्टी, उतारूसाठीं गवताची झोपडी. A hut.—मराठी व्युत्पत्तिकोश।

२. An umbrella—Captain George Stack: A Dictionary Sindhi English Language.

३. चटइ—Matting or a mat (of bamboo, date, borassus &c.)
—J. T. Molesworth : A Dictionary, Marathi & English.

४. द्र० ६८ पृष्ठस्था द्वितीया टिप्पणी।

५. Chaṭkā—a large bamboo basket.
—A Mundari English Dictionary.

६. चट्टू—देशीनाममाला ३,१; चट्टु, चट्टुअ; चट्टुल—गा. १६२ अ (तु० वुं० —चट्टुआ=दर्वी [दारुनिर्मिता]।

७. चाटु, चाटसी—A wooden laddle.—मराठी व्युत्पत्तिकोश।
Chāṭu—earthen pot; pitcher.
—A Mundari English Dictionary.

८. विशुद्धकाष्ठस्य तु दण्डकन्दौ तथा शलाका अपि शुद्धवंशजाः॥
—युक्तिकल्पतरुः (श० क० द्रु०)।

९. The ancient chinese patterns being adopted by the Europeans. Gloria or alpaca in the common grades and silk in the finer ones have been substituted for the oild paper once used for the covering, while grooved steel ribs have taken the place of the bamboo, ratten or oak ones.
—The Encyclopædia Americana (see umbrella).

१०. छत्त—विनयपिटक—१,१५२;२,११४; दीघ०—१,७ = वितानम्।
सेतछत्त— under which गोतम is seated —जातक—१,२६७.
सेतछत्त—Royal canopy, one of the 5 insignia regis (सेतछत्त—प्रमुखं पञ्चविधं राज—*ककुधभण्डं—पेतवत्थु74.
—P. T. S. Pali-English Dictionary.

तदीया विशङ्कटता[1] सुस्पष्टा। पञ्जाबप्रदेशेष्वद्यापि छत्त्रवाचकौ 'छत्री' 'चतरी' इति शब्दौ मुन्यादिनिवासवाचकौ[2]। कुटीवाचकश्चट्टीशब्दो महाराष्ट्रियभाषायां प्रसिद्धः[3]। बदरीनाथादिमार्गेऽपि चट्टीशब्दः कुटीर- (विश्रामालय-) वाचकः। निष्कर्षतस्तृणाद्याच्छादनास्तरणवाचकाश्चटादिशब्दाः।

संतालभाषायां चटाईशब्दः सभास्थलवाचकः संज्ञावचनः क्रियावचनश्च[4]। (तु० छत्तंतिया-(<छत्त्रान्तिका)=परिषद् [बृहत्कल्पभाष्य- १])। महाराष्ट्रियभाषायां चाटशब्दः (तु० याज्ञ० १,३३५) गल्पप्रलापादिवाचकः[5]। संस्कृतभाषायाश्चटुचाटुशब्दौ वाचाटश्च चटचाटसंबद्धाः। तत्र तथार्थको न कोऽपि तादृशो धातुः। संतालभाषायां संज्ञा-विशेषण-क्रियावाचकः 'चटि' इति शब्दो गल्पप्रलापार्थकः[6]। मैथिलभाषायां चटिसारशब्दो गल्पशालावाचकः। टर्नरमहाशयेन मैथिलभाषीयचटिसार-शब्दं भ्रान्त्या 'छटिसार' इति लिखता तस्य तुलना छात्त्रिशाला (पाग० ६,२,८६)-शब्देन सह कृता; तन्न समीचीनम्, छात्त्रिशब्दस्याचार्यविशेषवाचकत्वात्। छात्त्रिशालाशब्दस्य तथार्थः टर्नरमहाशयेन वासुदेवशरणमहाशयस्य पुस्तकाद् गृहीतः स्यात्[7]। केवलश्चटी-

१. छेथ्र्—an umbrella. esp. a large umbrella. ( an ordinary umbrella is छतरि ( ? )

—A Dictionary of the Kashmiri Language.

चेतेर ( ceter ) 'shelter from sun or rain, a large state umbrella'.

—J. Gonda : Sanskrit in Indonesia.

२. छतरी, छत्री—a place of a साधु ( an ascetic )

—The Panjabi Dictionary.

३. द्र० ६६ पृ० प्रथमा टिप्पणी।

४. चटाई, n. v. a., Place of meating; meating ( for adjudicating ); a mat; have a meating, पंचायत तले सकम् रेञ्रक चटाई —A mat made of palm-leaves. ( A place for a village-meating )—P. O. Bodding : A Santal Dictionary.

५. चाट = गप्प, बडबड Tedious prate—मराठी व्युत्पत्तिकोश।

६. चटि, n., adj., v. a. m. False statement—A Santal Dictionary.

७. Pāṇini referes to female students as छात्त्रि and their hostels छात्त्रिशाला ( Vi. 2. 86 ).

—Vāsudeva śaraṇa Agrawala : India as known to Pāṇini, Pages 287.

शब्दोऽपि हिन्दीभाषायां पाठशालावाचकः[1]। चटसारशब्दस्तत्र शैक्षपाठशालावाचको ज्ञेयः[2]। चट्ट = विद्यार्थी[3], चट्टसाला = शैक्षपाठशाला[3]। टर्नरमहोदयप्रदर्शितस्य मैथिलभाषीयस्य 'छटिसार' इति शब्दस्य शुद्धं स्वरूपमस्ति—'चटिसार' इति। तदीयश्चार्थो गल्पशालेति गल्पस्थानमिति वा। इह प्रसङ्गे सन्तालभाषायास्तुलनीयः 'चटि' इति शब्दः[4]। तृणाद्यासनवाचकस्तदनु कुटीरवाचकस्तदनन्तरं च सभास्थलवाचकोऽयं जातः शब्दः। सभास्थले प्रशंसादिकं ( गल्पादिकं ) प्रवर्तत एवेति तदर्थो नूनं क्रमिकः।

द्रविडभाषासु चट्, चट्ट, चट्टु, चाट्ट-प्रभृतयः शब्दाः काष्ठतृणादिवाचकास्तन्निर्मितास्तरणपात्रादिवाचकाश्च। इमे शब्दाः कन्नड-तमिल-मलयालम-तेलुगु-नैकि-गोण्डी-कोता-तुलु-कोडगु-पार्जि-भाषासु विद्यमानाः[5]। तत्र कन्नडभाषायां तेलुगुभाषायां च चाट्टशब्दस्यार्थः—वर्षातपवायुनिरोधक आश्रय ( तु० हिन्दी—चट्टी[6] ) इति। तमिलभाषायां मलयालमभाषायां च 'चट्टम्' इति शब्दस्यार्थः—परिगतं काष्ठम्, खट्वाद्वारवातायनादिपरिगतं काष्ठम्। कोताभाषायां 'चट्' इति शब्दश्छद्याधारकदीर्घदण्डवाचकः। कन्नडभाषायां 'चट्ट' इति शब्द आसन्दीखट्वाशकटशिविकादिपरिगतकाष्ठवाचकः 'चट्टु' इति शब्दस्तु शकटपरिगतकाष्ठाभिधायकः। तुलुभाषायाः 'चट्ट' इति शब्दो याप्ययानतृणशय्यादिवचनः, तेलुगुभाषायाश्च 'चट्टमु' इति शब्दोऽपि। तमिल-; तेलुगु—चट्टि = मृन्मयं पात्रम्, मलयालम—पात्रम्, कन्नड—चट्टि; चेट्टि = बृहन्मुखं मृन्मयं पात्रम्। तुलु—चट्टि = बृहन्मुखं

---

१. 'मुनिवृंद जहाँ जिहि वेदपठी सुक सारस हंस चकोर चटी'—हिन्दीशब्दसागर।

२. अब समझी हम बात तुम्हारी पढ़े एक चटसार—सूर ( हि० श० सा० )।
जिनके सँग चटसाल पठायौ राम नाम सौं तिन चित लायौ
—सूर ( हि० श० सा० )।

३. चट्टसाल ( बृहत्कल्पभाष्य-१ )। स्यात् 'चट्टोपाध्याय' इति शब्दार्थोऽपि —चट्टानाम्=शैक्षानाम् उपाध्याय इति।

४. द्र० षष्ठटिप्पणी ७० पृष्ठस्था।

५. T. Burrow & M. B. Emeneau : A Dravidian Etymological Dictionary, १८९८;१८९९;१९०१;१९०५;१९०६;१९०७; २०१४ संख्याकाः शब्दा द्र०।

६. सो कहु आगे द्वीप लखाई। तहँ इक चट्टी परम सुहाई॥
—रघुराज ( हि० श० सा० )।

मूत्रणपात्रम् (chamber-pot)। तमिल-; मलयालम—चट्टुकम् = दर्विर्दीर्घदण्डा। कोता—चट्य = लौहदर्विः। कन्नड—सट्टुक, सट्टु, सट्टुग, सोटक (तु० हिन्दी—सौंटा) = दर्विः; कोडगु—चट्टुव = दर्विः (काष्ठमयी); तेलुगु—चट्टुवम्=दर्विः। तमिल—चट्टै=अंसकूटादिकं परिधानम्, कन्नड—चट्टे=परिधानम् (यूरोपीयसज्जानुरूपतां गतम्); तुलु—चट्टेगारे=यूरोपीयपरिधानमण्डितो देशीयो जनः। नैकि—सट्टे=कटः, पार्जि—चट्ट=कटः। तु० हिन्दी—चट्टा=वेणुविनिर्मितः कटः[१]। निष्कर्षतो वेणुतृणकाष्ठादिमूलका एते शब्दाः। परिधानीये चात्तु (चात्ति), चातु—प्रभृतयः शब्दाः[२]।

द्राविडभाषासु च्छत्त्रवाचकाः शब्दाः कुट (कुटी)—मूलकाः। तमिल—कुटै=छत्त्रम्; मलयालम—कुट=छत्त्रम्; कोता—कोड् (Kor)= छत्त्रं पत्त्रनिर्मितम्, केड्=छत्त्रम्; तोदा—कड्, कन्नड—कोडे, कोडगु—कोडे= छत्त्रम्, नृपच्छत्त्रम्। तुलु—कोडे, तेलुगु—गोड्डुगु=आतपत्त्रम्[३]।

तत्र चटाद्याश्रित्योपविष्टाः समवेता गल्पपराः, पठनपराः, प्रशंसापरा इति तदर्थं चटि, चटिया इति शब्दौ; चटु-, चाटु-, **वाचाटः**, **वाचाल** इत्येते चत्वारः संस्कृतशब्दाः। चतुरशब्दोऽप्यत्रैव ज्ञेयः, तस्य काल्पनिकव्युत्पत्तिमत्त्वात्[४]। चतुरशब्दः पाल्यादौ चटुलतां[५] गतस्ततः पुनः संस्कृतभाषायां चटुलरूपेणैव प्रयुक्तः[६]। 'सन्तालभाषायां देवाविष्टः 'चटिया' इति कथ्यते[७] छात्त्रस्तु 'चटिआ' इति[७]। इह दिशि द्रविडभाषाशब्दा एव स्वाभाविकं मूलं

१. हिन्दीशब्दसागर।

२. २०२१ तमिल—चात्तु (चात्ति—) To put on, adorn (idols, great persons) wear as a caste mark; n. wearing as a garland. तेलुगु—चातु—To wear (कन्नड esp. holy clothes, caste mark, etc.

३. A Dravidian Etymological Dictionary, द्र० शब्दसंख्या—१३८६

४. चतति, चत्यते वा। 'चते याचने'। उरच् (उ० १।३८)—भानुजिदीक्षितः।

५. महावंस १४८ (P. T. S. Pali English Dictionary.)

६. श्रासातिमात्रचटुलैः—रघु० ६,५८।

७. चटिआ=Pupil, schoolboy. गुरु ठें चेला चटिआ को दुरुप अकन= disciples and pupils are sitting with the guru.
चटिया—A man possessed by a bonga, a medium.
—P. O. Bodding : A Santal Dictionary.

दर्शयन्ति नान्ये। तद्यथा तेलुगु—चदु ( वु )=अध्ययने, पठने ( धातुः ), संज्ञायां पठनम्, अध्ययनम्; चदुवरि = छात्त्रः। तमिल—चतुर, चतिर = योग्यता, बुद्धिः। मलयालम—चतुरम् = चतुरः; कन्नड—चदुरु, चेदुरु = चातुर्यम्; तुलु—चदुपु = बुद्धिः, धूर्तता; तेलुगु—चदुरुण्डु=चतुरः, योग्यः; चदुरालु ( स्त्री० )।

इदानीं तावत् 'छत्रं शीलमस्याः' इत्यर्थे कः शब्दः—छात्त्रा वा छात्त्री वेति विचार्यते। आकरग्रन्थेषूभयोरेवानुपलम्भाद् विवादः। 'टिड्ढाणञ्द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः' (४.१.१५) इत्यनेन सूत्रेण खल्वण्प्रत्ययान्ततायां ङीप् सिद्ध्यति स्त्रीत्वविवक्षायाम्। छत्त्रादिभ्यो णः' ४.४.६२ इत्यनेन सूत्रेण णविधानमिति टावेव न ङीप्।

कार्मस्ताच्छील्ये ६.४.१७२ इत्यत्र महाभाष्यम्—'किमर्थमिदमुच्यते, 'नस्तद्धिते' इत्येव सिद्धम् ?, न सिद्ध्यति, अनणीति प्रकृतिभावः प्रसज्येत, अणीत्युच्यते। णश्चायम्, एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यः—'ताच्छीलिके णेऽण्कृतानि भवन्ति' इति। किमेतस्य ज्ञापने प्रयोजनम् 'चौरी तापसी इति। अणन्तादितीकारः सिद्धो भवति' इति।

अत्र महाभाष्ये कैयटप्रदीपाभिप्रायः--णप्रत्ययविधानेऽण्प्रत्ययकार्यार्थं 'ताच्छीलिके णेऽण्कृतानि भवन्ति' इति परिभाषायाः स्वीकारे गौरवाद् अण्प्रत्ययविधानमेव युक्तम्, परिभाषा च न कर्तव्या। 'छत्त्रादिभ्योऽण्' इति न्यासेन 'छत्त्रादिभ्यो णः' इति न्यासस्य परिभाषायाश्च प्रत्याख्याने भाष्यतात्पर्यमिति कैयटोऽभिप्रैति। तथा चाभिधाने सति, अविशेषात् सर्वेभ्यश्छत्त्रादिभ्यस्ताच्छीले स्त्रियां ङीविष्ट इति 'छात्त्री' प्रयोग आयाति[1]।

अत्र नागेशोद्योताभिप्रायः—अपूर्ववचनेन ज्ञापकसिद्धपरिभाषाया वा ङीब्विधाने न फलैक्यं किन्तु फलवैषम्यम्। साक्षाद् वचनं सार्वत्रिकम्। 'ज्ञापकसिद्धं न सर्वत्र' इति सिद्धान्ताद् ज्ञापिता परिभाषा काचित्की। तथा च परिभाषाज्ञापनार्थं यथाश्रुतन्यासस्य परिभाषायाश्चापेक्षायां न प्रत्याख्याने भाष्यतात्पर्यम्। ज्ञापिता च परिभाषा 'चौरी तापसी' इत्यादौ ङीपं प्रवर्तयिष्यति, अनिष्टं छात्त्राशब्दे ङीपं न प्रवर्तयिष्यतीति[2]।

---

१. ताच्छीलिक इति। एवं च च्छत्त्रादिभ्योऽण् इति लाघवाय कर्तव्यम्, प्रयोजनाभावात् 'प्रज्ञाश्रद्धे'ति 'ज्वलितिकसन्तेभ्यः' इति। 'तदस्यां प्रहरणम्' इति णवचने ङीबभावः प्रयोजनमिति।

२. एवं चेति। ज्ञापके हि ज्ञापकसिद्धस्यासार्वत्रिकत्वाच्छात्त्रेति सिद्ध्यतीति चिन्त्यमिदमित्यन्ये। अन्यत्र णवचने प्रयोजनमस्तीत्याह—प्रज्ञेत्यादि।

इदं त्वत्रावधेयम्—अत्रत्यन्यासयोर्मात्रालाघवविचारो बहूनां न शोभते, उभयोष्टीकयोः परिभाषाकरणाकरणलाघवगौरवाभ्यामेव समन्वयात्, 'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' इत्यादिपरिभाषायाः शेखरग्रन्थस्य तत्संबद्धभाष्यतट्टीकाग्रन्थानां पर्यालोचनया चैतादृशमात्रालाघवस्य भाष्यकृद्भिर्बहुत्रावहेलनाच्च।

'छात्री' इतीष्यते तदा कैयटव्याख्यानं साधीयः, 'छात्त्रा' इतीष्यते तदा नागेशव्याख्यानम्। इष्टत्वानिष्टत्वयोर्मूलं त्वन्यदेव, तादृशं च नोपलभ्यते। कैयटमतेन सर्वत्रैव ङीप्, नागेशमतेन च कुत्र ङीप् कुत्र टाबिति नियामकान्तरमन्वेषणीयम्। शिक्षाशीलमस्या इत्यर्थे शैक्षी शैक्षा वेति निर्णयो न भवति प्रयोगशरणत्वाद् वैयाकरणानाम्। नागेशेन स्फुटं 'छात्त्रा' इति शब्दः प्रयुक्तः साधितश्चेति 'छात्त्रा' इति प्रयोगाध्यापनस्यास्ति काचन परम्परा वैयाकरणानामिति विवक्षामि। महाभाष्यस्यैव व्याख्यानेन प्रयोगाः कल्प्यन्ते। अन्येषां तु व्याख्यानं प्रयोगानुसारितया समाद्रियते न तु तेन प्रयोगः कल्प्यते इति। कैयटग्रन्थे तु छात्त्राशब्दो न दृश्यते, कदाचन प्रयोगनिर्णयेऽनवहितोऽपि कैयटो भाष्यतात्पर्यनिर्णय एव व्यापृतः स्यात्, नागेशेन चान्यत्र कुत्रापि 'छात्त्रा'-शब्द उपलब्धो भवेदिति।

नागेशात् पूर्वं प्रक्रियासर्वस्वकारेण नारायणभट्टेन सुस्पष्टं 'छात्त्री'-शब्द उदलेखि—"छात्त्रादिणस्याणकार्यमिष्यते' तेन ङीप्, छात्त्री तापसी[1]" इति। चान्द्र-जैनेन्द्र-सरस्वतीकण्ठाभरण-व्याकरणेषु णप्रत्ययविधानेन न तदिष्टं ज्ञायते सम्यक्। हैम-शाकटायनव्याकरणयोस्तु सुस्पष्टम् अञ्प्रत्ययः[2] इति 'छात्त्रा'-शब्दस्य कल्पनैवास्तं गच्छति। (द्र० सिद्धहैमशब्दानुशासनम् २.४.२०)।

'छत्त्रं शीलमस्याः' इति व्युत्पत्तौ कन्याः स्वासामाचार्याणां छत्त्रं वहन्ति स्म, आचार्यास्तथैव सेवन्ते स्म यथा शिष्यो गुरुम्? कन्याश्च कीदृशीं गुरुदक्षिणां प्रयच्छन्ति स्म? इति जिज्ञासोदये सति विनिवेदना यद् भारते वर्षे कन्यानां तादृशगुरुसेवादिनियमाभाव एव। विद्यार्थिन्या अन्तेवासिन्याश्चापि प्रयोगानुपलम्भः।

१. छत्त्रादिभ्यो णः ४.४.६२।

२. अडस्थाच्छत्त्रादेरञ्—६.४.६० अडन्तात् स्थश्छत्त्रादेश्च तदस्य शीलमिति विषयेऽञ् स्यात्—सिद्धहैमशब्दानुशासनम्।

छत्त्रादेरञ्—३.२.६३—शाकटायनव्याकरणम्।

३. छत्त्रसत्यानृतविशिखादिभ्यो गुरूपसदनादिवृत्तिभ्योऽणः —सरस्वतीकण्ठाभरणम् ४.४.११९।

लहँदाभाषायां 'छात्त्रा' इति शब्दो वृद्धातत्यर्थकः[१]। तेलुगुभाषायां च स्त्रीलिङ्गे 'चदुरालु' इति शब्दो योग्यार्थकः[२]। 'चौरी' 'चौरा' इति द्वेधा प्रयोगोपलम्भादपि छात्त्रादिगणस्थशब्दानां विभाषया ङीप्टापौ मन्तव्यौ[३]। तापस्याष्टावन्तं रूपं गवेष्यम्। वैयाकरणानां लौकिकानां चापि द्वेधा संप्रदाय इत्यलम्।

---

१. A Comparative Dictionary of the Indo-Aryan Languages.

२. A Dravidian Etymological Dictionary, द्र० शब्दसंख्या १९२० इति ।

३. चन्द्रिका चन्द्रधात्री च चौरी चौरा च चण्डिका ।
—देवीभागवतम् १२,६,४६

# अनुक्रमणिका

### आयरिश्–

कथिर् [पु० आ०] = नगरम् ६४.
कॉन् [पु० आ०] con = शुनः (षष्ठी) ३२.
कू [पु० आ०] cū = श्वा ३२.
कैसेल् [म० आ०] = पटोटजम् ६४.
दो-ओम्-मल्ग् do-om-malg = दोहनम् ११.
बो-मिल्गे bo-milge = गोदुग्धस्य ११.
बो-म्लश्त bo-mlacht = गोदुग्धम् ११.
[*बो-म्लिश्त] [*bo-mlicht] = गोदुग्धम् ११.
ब्लिगिम् [म० आ०] = दोह्मि ११.
ब्लिश्त blicht = दुग्धम् १५.
मेल्ग् melg = दुग्धम् ११.
[*म्लिगिम् = दोह्मि ११.
म्लेगुन् mlegun दोहनम् ११.

### आसाम–(प्राग्ज्योतिषीय–)

उहार = पशूधस् १.
वारु=पृथुतरम् ( वि० ); सुसाधु (क्रि० वि० )-५४.

### इँग्लिश्–

अन्टू unto=अन्ते ( समीपे ) ४६.
उड्डिर् [म० इँ]=ऊधस् २.
नॅव Now=अधुना ६१.
नी Knee=जानु २८.
नैस्ट nest=नीडम् ४६.
√मर = आहनने ६.
मिल्क् [म० इँ] = दुग्धम् ८;६.
मुल्क् [ ,, ,, ] = दुग्धम् ८.
मेल्क् [ ,, ,, ] = दुग्धम् ८.
म्ल्क् [ ,, ,, ] = दुग्धम् ८.
हाउण्ड् hound [म० इँ] = श्वा २३.
हाउण्ड् hound=श्वा ३१
हुण्ड् hund [ म० इँ ] = श्वा ३२

### इण्डोनेशिया–

चेतेरे = छत्रम्, राजकीयं विशालं छत्रम् ७०.

### उड़िया–

चट
चटाइ
चटाई } =कटेनाच्छादनम्; कटः ६८.

### कन्नड–

कुडिके = घटी, धातुघटी, दारुघटी ४४.
कोड = मृन्मयो घटः ४४.
गुडाण = गर्गरी ( मन्थनी ), कुसूलिका ४४.
गुडुवन = गर्गरी (मन्थनी) कुसूलिका ४४.
चट्ट = परिगतं काष्ठम् ७१.
चट्टि = वृहन्मुखं मृन्मयं पात्रम् ७१.
चट्टु = शकटपरिगतं काष्ठम् ७१.
चट्टे = परिधानम् ७२.
चदुरु = चातुर्यम् ७२.
चाट्टु = वर्षादिनिरोधक आश्रयः ७१.
चातु = पवित्रवस्त्राणां परिधाने ७२.
चेट्टि = वृहन्मुखं पात्रम् ७१
चेदुरु = चातुर्यम् ७२.
सट्टक = दर्विः ७२.
सट्टु = दर्विः ७२.

मर्ज़्जन् marzjan = क्लेशने १०.
मिलुक्स् miluks, milux = दुग्धम् ६;११.
मिल्क् milk दुग्धम् ६.
हुन्द्स् hunds श्वा ३२.

गुर्जर–

जाई = माता २५.
जान् = जन्ययात्रा १७.
जानत्र = जन्ययात्रा १७.
सुनुं = शून्यम् ३३.
सून् = शून्यता, रिक्तता ३३.
सून् } = शून्यम् ३३.
सूनुं }

गेलिक्–

कू kū=कुक्कुरः ३२.

ग्रीक्–

अन ( उपसर्गः ) = अनु ४८.
अन्ति anti=संमुखे (अन्ति) ४५.
अमॉल्गेउस् = दोहनी (दोहनघटी) ११.
अमेल्क्तेर् = दोहनी (दोहनघटी) ११.
अमेल्गो = दोग्धि ११.
इप्पेमॉल्गोस् = गोदोग्धा ११.
उद्रोस् (uδρos) = ऊधस् २.
ऊतर् [म० उ० ज०] = ऊधस् २.
एपिसेद्यो = अपि √सद् ४६.
ऐन् नुक्तोस् अमोल्गो (होमरिक्) = क्षणेन रात्रिप्रकाशदोहनम् ११.
ओउथार् = ऊधस् २.
कुओन् Kuōn=श्वा (श्वन्) ३२.
कुन् Kun = श्वा (श्वन्) ३२.
केइनोस् Keinòs (आयोनिक्) = शून्यम् ३६.
केनेओस् Keneòs = शून्यम् ३६.
केन्नोस Kennos (ईथोलिक्) = शून्यम् ३६.
गुनी guni = जनी (जाया) २८.
तनोस् = तनप् (प्रत्ययः) ६२.
नून = संप्रति ६०.
पिएद्यो = अपि + √सद् > √पीड् ४६.
वॉउमोल्गोस् = गोदोग्धा ११.
मर्नैइन = दुर्बलीकरणे १०.
मील्गेइन् = प्रपूरणे ६.
मेइल्-इक्सॉस् = कोमलार्थे १०.
मेइल-इक्सिआस् = कोमलार्थे १०.
होदोस् = सृतिः (सदस्) ४८.

जर्मन्

अन (उपसर्गः) = अनु ४८.
अन्त [म० ज०, नि० ज० ] = संमुखे (अन्तिके) ४६.
अन्द } [ पु० ज० ] = संमुखे
इन्त } ( अन्तिके ) ४६.
उन्तिस [पु०ज०] = अन्तिके ४६.
ऊतर [म० उ० ज०] = ऊधस् २.
ऐन्त [ म० ज०, नि० ज० ] = संमुखे (अन्तिके) ४६.
ओइतेर् Euter = ऊधस् २.
कपुत = सैनिकांसकूटम्, उष्णीषिका ६४.
कॉने [पु० ज०] Kone = जनी २६.
कुऐने[पु० ज०] Quene = जनी २६.
क्त्तो [ पु० उ० ज० ] Kratto = पिटकिका ४२.

### जापानीय–



### जिप्सी-( रोमानी )-



### डच्–



### डेनिश् –

तमिळ–

√कट = कालयापने, वर्षादिसमाप्तौ ४४.

कटत्तु = तरणिः ४४.

कटल = अकूपारः ४४.

कुटम् = कुटः ( घटः ) ४४.

चट्टम् = परिगतं काष्ठम् ७१.

चट्टि = मृन्मयं पात्रम् ७१.

चट्टुकम् = दीर्घदण्डा दर्विः ७१.

चट्टै = अंसकूटादिकं परिधानम् ७२.

चतुर } = योग्यता, बुद्धिः ७२.
चतिर }

√चातु ( चात्ति ) = परिधाने ७२.

मरि = मेषी, मेषशावकः १२.

मरि-शैक्कु ( चैक्कु ) = दुग्धम् १२.

मार = उरः १३.

मारि = वृष्टिः, जलम् १३.

शाशि ( चाचि ) = मातृदुग्धम् १२.

शैक्कु ( चैक्कु ) = दुग्धम् १२.

शैक्कै ( चैक्कै ) = योषोरः १२.

शोड् ( चोड् ) = अोधस्यम् ४.

शोव् ( चोर्व ) = अौधस्यम् ४.

शौर् ( चौर् ) = अश्रु, रक्त-, दुग्ध-, ४.

तुरुष्क-( तुर्किश्- )

शादिर् = पटोटजम् ६४.

सुद = दुग्धम ४.

तुलु–

कुड्कि }
कुड्के } = घटी ४४.
गुड्के }

चट्ट = याप्ययानम्, तृणशय्या ७१.

चट्टि = बृहन्मुखं मूत्रणपात्रम् ७१.

चट्टेगारे = यूरोपीयपरिधानमण्डितो देशीयो जनः ७२.

चदुपु = बुद्धिः, धूर्तता ७२.

तेलुगु–

कुडक = कचोरिका ४४.

कुडक = पेटिका ४४.

कुड्डुक = कचोरिका ४४.

चट्टमु = याप्ययानम्, तृणशय्या ७१.

चट्टि = मृन्मयं पात्रम् ७१.

चट्टुवम् = दर्विः ७२.

चदुरालु = योग्या स्त्री ७२;७५.

चदुरुंडु = चतुरः, योग्यः ७२.

चदुवरि = अध्ययनम्, पठनम् ७२.

√चदु (वु) = पठने; अध्ययने ७२.

√चातु = परिधाने ७२.

तोखारियन्–

मल्क-वेर malk-wer=दुग्धम् १२.

मल्के malke=दुग्धम् १२.

माल्कुने malkune=दोहनम् १२.

दर्दिक्–

अोड़े ( शुमास्ती ) = उरः १.

वार् ( वश्करीक ) = प्रभूतम् ५४.

वार् ( वाढम् ) तोरवाली = स्थूलघनम् ५४.

वोड् ( वोटपूरी ) = उरः १.

वोंड ( गवर्वती ) = उरः १.

सून ( दमेली ) = शून्यम् ३३.

देशी–

कमढ = मुखम्, पिठरम् ३६.

**पालि–**

*ककुधभण्डम् ६६.
चट्टुल-=चतुर- ७२.
छत्त=छत्त्रम् ६७.
छत्त=वितानम् ६६.
जञ्ज=कुलीनजन- १६.
जनिका=माता २६.
जानिपतयो=जायापती २७.
दाळ्ह-=दृढम् ५२.
शोण्डी=शिलास्थितनैसर्गिकस्तडागः ३.
सुञ्ज=शून्यम्, शून्यता ३३.

**पोलिश्–**

म्लेको mleko=दुग्धम् ६.
सुक suk=शुनकः ३२.
स्त्सातेर्=पटोटजम् ६४.

**प्रशन्–**

वेदेस् (पु० प्र०)=उदरम् ३.
सुनिस् (पु० प्र०)=श्वा (शुनः) ३२.

**प्राकृत–**

अंबगट्ठिया ४२.
ऊह=ऊधस् १.
कम्मट्ठाण=कर्मस्थानम् ३६.
गंठ=√ग्रन्थ् ४२.
√गट्ठ=√ग्रथ् (ग्रन्थ्) ४२.
गट्ठिया=ग्रन्थिका ४२.
√गढ ४२.
गढइ ४२.
गढिअ=ग्रथित-, घटित- ४२.
√घड=चेष्टायाम् निर्माणे ४२.

चट्ट=(विद्यार्थी) ७१.
चट्टसाला=शैक्षपाठशाला ७१.
छत्तंतिया (<छत्त्रान्तिका)=परिषद् ७१.
छत्ता=छत्त्रा ६४.
जण्ण=जनहिकर- १६.
जण्णयत्ता=जन्ययात्रा १७.
जन्न=जनहितकर- १६.
जन्नत्ता=जन्ययात्रा १७.
जन्ना=जन्ययात्रा १७.
णिड्डु=नीडम् ४६.
दिट्ठिया वड्ढसि ५४.
धम्मिट्ठ=धर्मिष्ठ- ३६.
मरिस=१०.
वड्ढु<वड्ढ<वृद्ध ५४;५८.
शाहु=साधु ५६.
साहु=साधु ५८.

**फ्रिज़ियन्-(फ्रीज़ियन्–)**

मेलोक् (पु० फ्रि० )=दुग्धम् ८.
मेल्क melka (पु० फ्रि० )=दुग्धम् ६.
यादर् (पु० फ्रि० ) iader=ऊधस् २.
हाण्ड् hond (पु० फ्रि०) = श्वा ३२.
हुण्ड् hund (पु० फ्रि० )=श्वा ३२.

**बँगला–**

चटा=वंशफलकम् ६८.
चटाइ ६८.
चट्टोपाध्याय–चट्टानाम्=शैक्षाणा-मध्यापकः ? ७१.
सून्=शून्यम् ३३.

ज्येन्श्चिना (zyenshchina)= जनी २९.
ज्येन्स्क् zyensk=नारीसंबन्धिन् २९.
मिलुइ milui=दयालुरूपार्थे १०.
मिलोसेर्दुई miloserduii = अनुग्रहार्थे १०.
मोलोको moloko = दुग्धम् ९.
मोलोजिवो molozivo = पशु-दुग्धम् १२.
शतैर् śater=पटोटजम् ६४.
सुक suk=शुनकः ३२.

रूमानियन्–

शत्रा śatră ६४.

लहँदा–

छात्रा = वृक्षततिः ७४.
जञ्ज = जन्ययात्रा १७.
सुंज् (जटकी) [स्त्री०] = (शून्यम्), मरुस्थलम् ३३.

लातिन्–

अन् (उपसर्गः) = अनु ४८.
अन्ते ante=अग्रे ४६.
ऊबेर्=ऊधस् २.
कनिस् canis = श्वा (श्वन्-) ३२.
कस्तेल्लुम् castellum = पटोटजः, कुल्या ६४.
कस्त्रुम् castrum = पटोटजः, कुल्या ६४.
तिनुस्, तेर्नुस् = तनप् (प्रत्ययः) ६२.
मुल्क्तुस् (सं० मृष्टस्) = दोहने ११;१२.
मुल्क्त्र mulctra = दोहनी ११.
मुल्गेग्रो-एरे = दोहने ११.
मुल्गेरे = दोहने ९.
मुल्सि = दोहने ११.

लिथुआनियन्–

ऊद्रुग्रो-जु, ति = ऊधस् २.
पशुने = दृढता ३४.
पशूने = दृढता ३४.
मल्ज़िति malziti = दोहने (परोक्षे) १२.
मिलेति myleti = प्रियतायाम् १०.
मिल्ज्तस् milztas (सं० मृष्टस्) = दोहने १२.
मिल्स्ज़ति = आहनने, प्रपूरणे ९.
मेलस् melas = प्रियार्थे १०.
वेदरस् vedaras (<ऊधर्) = रक्तम् ३.
शौंनस् (सं० शुनम्) = कर्मक्षमम्, दृढम् ३४.
शौनुस् (सं० शुनम्) = कर्मक्षमम्, दृढम् ३४.
शौलिस् (पु० लि०) = उत्सङ्गः, कटिः, जघनम् ३४.

लेट्टिश्–

नून् = संप्रति ६०.
लिग्ज्द = नीडम् ४९.
वेदर्स् vedars=उदरम् ३.

वेण्डिश्–

मेलौक melauk=दुग्धम् ९.
म्लोको mloko=दुग्धम् ९.

स्लावोनिक्-



स्वीडिश्-



हंगेरियन्-



हिन्दी-



इण्डो-आर्यन्-

# सहायकग्रन्थसूची


१. अथर्ववेदसंहिता ( शौनकीया )—सायणभाष्योपेता, प्रकाशकः—ऋषिकुमार-पण्डितरामचन्द्रशर्मा, मुरादावाद, संवत् १९८७ ।

२. अनेकार्थसंग्रहः–हेमचन्द्रसूरिप्रणीतः, edited by Theodor Zachariae, Vienna 1893.

३. अभिज्ञानशाकुन्तलम्—चौखम्बा-संस्कृत-सीरिज, १९५५ ई० ।

४. अभिधानचिन्तामणिकोशः ( हेमचन्द्राचार्यविरचितः ), अहमदाबाद, वि० सं० २०१३ ।

५. अभिधानरत्नमाला—हलायुधविरचिता, मोतीलाल-बनारसीदास, १९२८ ई० ।

६. अमरकोशः—अमरकोशोद्घाटनव्याख्यासहितः, टी० गणपतिशास्त्रिसंपादितः, त्रिवेन्द्रम् १९१५ ई० ।

७. अमरकोशः—व्याख्यासुधासंवलितः, निर्णयसागरमुद्रणालयः, १९१५ ई० ।

८. आश्वलायनगृह्यसूत्रम्—( अनाविलवृत्तिसमेतम् ), त. गणपतिशास्त्रिसंशोधितम्, त्रिवेन्द्रम्, १९२३ ।

९. आश्वलायनश्रौतसूत्रम् ( गार्ग्यनारायणीयवृत्तिसहितम् ), रामनारायणविद्यारत्नेन संशोधितम्, कालिकाता, १८७४ ई० ।

१०. उणादयः ( वैयाकरणसिद्धान्तकौमुद्यन्तर्गताः ) ।

११. उणादिसूत्राणि ( श्वेतवनवासिवृत्तियुतानि ), मद्रपुरीयविश्वविद्यालयः, १९३३ ई० ।

१२. ऋग्वेदसंहिता ( सायणभाष्योपेता )—वैदिकसंशोधनमण्डलम्, पुण्यपत्तनम् ।

१३. ऐतरेयब्राह्मणम् ( सायणभाष्यसमन्वितम् ), आनन्दाश्रममुद्रणालयः, १९३१ ई० ।

१४. कथासरित्सागरः ( सोमदेवभट्टरचितः )—पाण्डुरङ्गजावजी, निर्णयसागरमुद्रणालयः, मुम्बयी, १९३० ई० ।

१५. कल्पद्रुकोशः—केशवकृतः ( रामावतारशर्मसंपादितः ), Oriental Institute, Baroda, 1928.

१६. काशकृत्स्नधातुव्याख्यानम्—( भारतीयप्राच्यविद्याप्रतिष्ठानम् ) अजमेर, वि० सं० २०२२ ।

१७. काशिका ( वामनजयादित्यविरचिता )—चौखम्बा-संस्कृत-पुस्तकालयः, वाराणसी १९५२ ई० ।

१८. काशिका-विवरणपञ्जिका (न्यासः)—जिनेन्द्रबुद्धिप्रणीता (Vol. I, Part V) राजशाही, १९१६ ई० ।

१९. कोशकला—रामचन्द्रवर्मविरचिता, साहित्यरत्नमाला-कार्यालयः, २० धर्मकूपम्, वाराणसी ।

२०. कौटलीयार्थशास्त्रम्—विष्णुगुप्तविरचितम्, प्राच्यविद्यासंशोधनालयः, मैसूरविश्वविद्यालयः, मैसूरु, १९६० ई० ।

२१. कौषीतकिगृह्यसूत्रम्—टी० आर० चिन्तामणिसंपादितम्, मद्रास, १९४४ ई० ।

२२. क्षीरतरङ्गिणी—डा० ब्रूनो-लीबिश-संपादिता, लाइप्त्सिश्, १९३० ई० ।

२३. गणरत्नमहोदधिः—वर्द्धमानविरचितः (मोतीलाल-बनारसीदास)।

२४. गोभिलगृह्यसूत्रम् (भट्टनारायणभाष्ययुतम्), चिन्तामणिभट्टाचार्यसंपादितम्, कालिकाता, १९३६ ई० ।

२५. चतुर्भाणी (डा० मोतीचन्द्रसंपादिता)।

२६. चान्द्रव्याकरणम्—चन्द्रगोमिप्रणीतम्, क्षितीशचन्द्रचटर्जिसंपादितम्, पूना ।

२७. जैनेन्द्रव्याकरणम्—देवनन्दिविरचितम्, जैनेन्द्रमहावृत्तिसहितम्, भारतीयज्ञानपीठ, काशी, १९५६ ई० ।

२८. तन्त्रवार्तिकम्—कुमारिलभट्टविरचितम्, आनन्दाश्रमः, पुण्यपत्तनम्, १९३१ ई० ।

२९. ताण्ड्यमहाब्राह्मणम् (सायणभाष्यविराजितम्)—चौखम्बासंस्कृतसीरिज ।

३०. तैत्तिरीयब्राह्मणम्—आनन्दाश्रममुद्रणालयः, १९३४ ई० ।

३१. तैत्तिरीयसंहिता (भट्टभास्करमिश्रविरचितभाष्ययुता), Vol. X, mysore, 1897.

३२. देवीभागवतम्—(मनसुखराय मोर), १९६० ई० ।

३३. देशीनाममाला—हेमचन्द्रविरचिता, कालिकाताविश्वविद्यालयः, १९३१ ई० ।

३४. नानार्थरत्नमाला (शब्दकल्पद्रुमोद्धृता)।

३५. निरुक्तम् (यास्कप्रणीतम्)—खेमराज-श्रीकृष्णदासश्रेष्ठी, मुम्बयी, १९८२ संवत् ।

३६. नैषधमहाकाव्यम् (मल्लिनाथटीकायुतम्), चौखम्बासंस्कृतसीरिज, वाराणसी

३७. पद्मप्राभृतकम्—शूद्रकविरचितम्, पटना, १९२२ ।

३८. पाइअसद्दमहण्णवो—हरगोविन्ददास त्रिकमचंद सेठ, प्राकृतग्रन्थ परिषद्, वाराणसी–५, १९६३ ई० ।

३९. पाणिनीयधातुपाठसमीक्षा—डॉ० भागीरथप्रसादत्रिपाठिप्रणीता, वाराणसेयसंस्कृतविश्वविद्यालयः, १९६५ ई० ।

४०. पादताडितकम्—श्यामिलकविरचितम्, पटना १९२२ ।
४१. पैप्पलादसंहिता ( रघुवीरसंपादिता ), सरस्वतीविहारः, लवपुरम्, १९९३ वि०; १९९६ वि० ।
४२. प्रक्रियाकौमुदी—रामचन्द्राचार्यविरचिता, भाण्डारकर ओरिएण्टल रिसर्च इंस्टिट्यूट, पूना १९२५ ई० ।
४३. प्रक्रियासर्वस्वम्—नारायणभट्टविरचितम्, ( तृतीयो भागः ), त्रिवेन्द्रम्, १९४८ ई० ।
४४. प्रयोगरत्नमालाव्याकरणम्—पुरुषोत्तमविद्यावागीशप्रणीतम्, कालिकाता, शकाब्दः १८१५ ।
४५. बृहच्छब्देन्दुशेखरः—नागेशभट्टविरचितः ( द्वितीयो भागः ), वा० संस्कृत-विश्वविद्यालयः, १९६० ई० ।
४६. बौधायनश्रौतसूत्रम्—edited by Dr. W. Caland, Volume II, Calcutta, 1907. Volume III; Calcutta, 1913.
४७. भट्टिकाव्यम् ( जयमङ्गलविरचितटीकोपेतम् ) ।
४८. भारत में आर्य और अनार्य—डा० सुनीतिकुमार चटर्जी, मध्यप्रदेश शासन साहित्य परिषद्, भोपाल ।
४९. मनुस्मृतिः ( मन्वर्थमुक्तावलीसहिता ) गुजराती प्रिंटिंग प्रेस, १९१३ ।
५०. मराठीव्युत्पत्तिकोश—कृष्णाजी पाण्डुरंग कुलकर्णी, गिरगाँव मुम्बई २, १९४६ ई० ।
५१. महाभारतम्—भारतभावदीपिकाख्यटीकायुतम्, चित्रशालामुद्रणालयः, पूना ।
५२. महाभाष्यम्—( प्रदीपोद्योतसहितम् ), गुरुप्रसादशास्त्रिसंपादितम् ।
५३. महाभाष्यम्—कीलहार्नसंस्करणम्, पूना १९६५ ई० ।
५४. मालतीमाधवम् ( जगद्धरटीकायुतम् ), भाण्डारकरोपाभिधेन गोपालसूनुना रामकृष्णेन संशोधितम्, बाम्बे, खिस्ताब्दाः १९०५ ।
५५. मीमांसाकोषः ( षष्ठो भागः )—केवलानन्दसरस्वतीसंपादितः, १९६२ ई० ।
५६. मृच्छकटिकम् ( रामानुजोझासंपादितम् )—चौखम्बासंस्कृतपुस्तकालयः, वाराणसी, १९५४ ई० ।
५७. मेदिनीकोशः—चौखम्बासंस्कृतपुस्तकालयः, वाराणसी, १९४० ई० ।
५८. युक्तिकल्पतरुः ( भोजराजकृतः ) शब्दकल्पद्रुमोद्धृतः ।
५९. रघुवंशमहाकाव्यम् ( मल्लिनाथविरचितटीकायुतम् ), वेङ्कटेश्वरमुद्रणालयः, १९६९ वि० संवत् ।

६०. राजतरङ्गिणी ( कल्हणविरचिता ), edited by M. A. Stein, Bombay.
६१. रूसीपाठ्यक्रम ( नीना पतापोवा )।
६२. वाराहगृह्यसूत्रम् ( डा० रघुवीरसंपादितम् ), लाहौर, १९३२ ई०।
६३. वाराहगृह्यसूत्रम्—edited by R. Sama Sastry, Baroda, 1921,
६४. वाल्मीकीयरामायणम् ( तिलकटीकासहितम् )—निर्णयसागरमुद्रणालयः, १९०२ ई०।
६५. वैजयन्तीकोशः ( यादवप्रकाशरचितः ) edited by Gustav Oppert, Ph. D.
६६. वैदिकपदानुक्रमकोषः (विश्वबन्धुसंपादितः), विश्वेश्वरानन्दवैदिकशोधसंस्थानम्, होशियारपुरम्।
६७. वैयाकरणसिद्धान्तकौमुदी ( गिरिधरशर्मचतुर्वेद-परमेश्वरानन्दशर्मसंपादिता )।
६८. व्रजभाषासूरकोष ( सं० प्रेमनारायण टण्डन ), लखनऊ विश्वविद्यालय।
६९. शतपथब्राह्मणम् ( सायणभाष्योपेतम् )—गङ्गाविष्णुश्रीकृष्णदास, कल्याण, बम्बई।
७०. शब्दकल्पद्रुमकोशः ( राधाकान्तदेवसंपादितः )।
७१. शब्दकौस्तुभः—भट्टोजिदीक्षितविरचितः ), चौखम्बा-संस्कृत-सीरिज, बनारस।
७२. शाकटायनप्रक्रियासंग्रहः ( श्रीमदभयचन्द्रसूरिरचितः ), प्रकाशकः—ज्येष्ठाराम-मुकुन्दजीशर्मा, मुम्बापुरी, १९०७ ई०।
७३. शाकटायनव्याकरणम् ( चिन्तामण्यपराभिधानलघुवृत्तिसहितम् )।
७४. श्रीमद्भागवतपुराणम् ( मूलमात्रम् )—गीताप्रेसगोरखपुरसंस्करणम्।
७५. संक्षिप्तसारव्याकरणम्—क्रमदीश्वरविरचितम्, Published by The Poor's Library, 64 College Street, Calcutta.
७६. सरस्वतीकण्ठाभरणम्—भोजदेवविरचितम्, ( टी० आर० चिन्तामणिसंपादितम् ), मद्रासविश्वविद्यालयः, १९३७।
७७. सिद्धहेमशब्दानुशासनम्—हेमचन्द्रप्रणीतम्, यशोविजयबनारसजैनपाठशाला, १९०५ ई०।
७८. सिद्धान्तचन्द्रिका—रामाश्रमविरचिता, चौखम्बा संस्कृत सीरिज आफिस, बनारस, १९३९ ई०।
७९. हरिवंशपर्व (पुराणम्)—चित्रशालामुद्रणालयः, पुण्यपत्तनम्, १९३६ ई०।
८०. हिन्दीशब्दसागर—श्यामसुन्दरदाससंपादित।



## आङ्गल-जर्मन-ग्रन्थाः

1. A Comparative & Etymological Dictionary of the Nepali Language—by R. L. Turner, London, 1931.
2. A Comparative Dictionary of the Indo-Aryan Languages—by R. L. Turner, London, 1960.
3. A Comparative Grammar of Sanskrit Greek & Latin—by William Hugh Ferrar, Vol. I, London, 1869.
4. A Comparative Grammar of the Dravidian—by R. Caldwell, London, 1856.
5. A Dictionary, Marathi & English—by J. T. Molesworth, Bombay, 1857.
6. A Dictionary of Selected Synonyms in the Principal Indo-European Languages—by Carl Darling Buck, Chicago, 1949.
7. A Dictionary of the Kashmiri Language—by G. A. Griersen.
8. A Dictionary of the Pushto Language—by Captain H. G. Raverty, London, 1860.
9. A Dictionary of the Scottish Language—by John Jamieson, abridged by John Johnstone, Edinburgh, 1846.
10. A Dictionary of the Suahili Language—by Dr. L. Kraft, London, 1882.
11. A Dictionary Sindhi English Language—by Captain George Stack.
12. A Dravidian Etymological Dictionary—by T. Burrow & M. B. Emeneau, Oxford, 1961.
13. Altindische Grammatik—von Jakob Wackernagel.
14. Altiranisches Wörterbuch—von Christian Bartholomæ, Berlin, 1961.

15. An Etymological Dictionary of the English Language—by Walter W. Skeat, Oxford.

16. A Mundari-English Dictionary—by Manindra Bhusan Bhaduri, Calcutta, 1931.

17. A Santal Dictionary—by P. O. Bodding, Oslo.

18. Buddhist Hybrid Sanskrit Dictionary, Yale University Press, 1953.

19. Compendium der vergleichenden Grammatik der indogermanischen Sprachen—von August Schleicher, Weimar, 1861.

20. Early Indus Civilization—by Ernest Mackay, London, 1948.

21. Etymologisches Wörterbuch der Griechischen Sprache—von Dr. Walther Prellwitz, Göttingen, 1905.

22. Gypsy Studies (Tales in the Baltic Dialect of Romani)—by Dr. Jan Kochanowski, New Delhi, 1963.

23. India as known to Pāṇini—by Dr. Vāsudeva Śaraṇa Agrawāla.

24. Indogermanische Grammatik (Teil III)—von Hermann Hirt, Heidelberg, 1927.

25. Indogermanisches etymologisches Wörterbuch—von Julius Pokorny, Francke Verlag Bern und München, 1959.

26. J. A. O. S.

27. Kurze vergleichende Grammatik der indogermanischen Sprachen—von Karl Brugmann, Strassburg, 1904.

28. Kurzgefasstes etymologisches Wörterbuch des Altindischen ( in progress ), Heidelberg, 1953 ff.

29. Lateinisches etymologisches Worterbuch—von Dr. Alois Walde, Heidelberg, 1910.

30. New Japanese-English Dictionary—by Senkichiro Katsumata, Kenkyusha, 1954.

31. Lectures on the Science of Language, vol. II.—by Max Müller, London, 1877.

32. Pāṇini's Grammatik—von Otto Böhtlingk, Leipzig, 1887.

33. Panjabi Dictionary, by Bhai Maya Singh.

34. P. T. S. Pali-English Dictionary—by T. W. Rhys Davis & William Stede.

35. Persian English Dictionary—by F. Steingass.

36. Sanskrit English Dictionary—by Theodore Benfey, London, 1866.

37. Sanskrit English Dictionary—by Monier Williams.

38. Sanskrit in Indonesia—by J. Gonda.

39. Sanskrit Wörterbuch—( Böhtlingk und Roth ).

40. The Century Dictionary—by William Dwight Whitney.

41. The Encyclopædia Americana.

42. The Indus Civilization—by Sir Mortimer Wheeler, Cambridge, 1953.

43. The Sanskrit Language—by T. Burrow.

44. Vergleichende Grammatik der altiranischen Sprachen —by Fr. Spiegel, Leipzig, 1882.

45. Vergleichendes Wörterbuch der indogermanischen Sprachen ( Alois Walde ) herausgegeben und bearbeitet von J. Pokorny, 3 vols., Berlin and Leipzig, 1927—32.

## शुद्धिपत्रम्

| अशुद्धम् | | शुद्धम् | | पृष्ठे | पङ्क्तौ |
|---|---|---|---|---|---|
| कादाचिकः | ... | कादाचित्कः | ... | २ | २ |
| फिशियन् | ... | फिजियन् | ... | २ | ८ |
| समादुगमः | ... | समोद्गमः | ... | १० | १४ |
| ओकारस्य | ... | आकारस्य | ... | १२ | १० |
| Julus | ... | Julius | ... | १२ | २४ |
| यथा | ... | यंथा | ... | १४ | २८ |
| जनी | ... | जनीं | ... | १४ | २८ |
| Engich | ... | English | ... | १६ | ३० |
| जन्नता | ... | जन्नत्ता | ... | १७ | ४ |
| जनशब्दः | ... | जनीशब्दः | ... | २६ | २ |
| Mengel | ... | Mangel | ... | ३४ | १५ |
| kraft | ... | Kraft | ... | ३४ | २१ |
| Holbstoz | ... | Holzstoss | ... | ३४ | २४ |
| वयवाधारकस्य | ... | वाग्वाधारकस्य | ... | ३५ | १० |
| तोरवली | ... | तोरवाली | ... | ५४ | ८ |
| काशकृत्स्तुनधाव्याख्याने | ... | काशकृत्स्नधातुव्याख्याने | ... | ५५ | १० |
| शब्दौ | ... | शब्दो | ... | ५५ | २७ |
| मध्यभि- | ... | मध्येभि- | ... | ६१ | १२ |
| शैक्षानाम् | ... | शैक्षाणाम् | ... | ७१ | २६ |

